अत्र फलं पूर्ववद्द्रष्टव्यम् । बृहदारण्यके श्रूयते—'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इत्यादि । तत्र किं

३. सङ्ख्योपसंग्रहाधिकरणम्। पञ्चजनशब्देन मूलप्रकृत्यादीनि पञ्चविंशतितत्त्वान्युच्यन्ते, उत वाक्यशेषगताः प्राणादय इति संशये, तत्त्वानीति पूर्वः पक्षः । सिद्धान्तस्तु—अस्मिन्मन्त्रे श्रूयमाणया पञ्चविंशतिसंख्यया स्मृतिसिद्धपञ्चविंशतितत्त्वानामुपसंग्रहादपि न प्रधानस्य शब्दवत्त्वम् । कुतः, नानाभावात् तेषां पञ्चानां पञ्चकानामेकपञ्चकपर्याप्तान्यपञ्चकव्यावृत्तधर्मवत्त्वाभावेन नानात्वात् । नानात्वेऽपि कथंचित्पञ्चविंशतिसंख्याङ्गीकारे बाधकान्तरमाह— अतिरेकाच्च । अस्मिन्मन्त्रे श्रूयमाणयोरात्माकाशयोः पञ्चविंशतितत्त्वातिरिक्तत्वात्सप्तविंशतितत्त्वप्राप्तावपसिद्धान्तापातः । तस्मान्नात्र प्रधानादितत्त्वग्रहणमुचितम् ॥

ननु ते पञ्चत्वसंख्याकाः पञ्चजनाः क इत्यपेक्षायामाह—

## प्राणादयो वाक्यशेषात् ॥ १२ ॥

प्राण एव आदिर्येषां प्राणचक्षुःश्रोत्रान्नमनसां ते प्राणादयः पञ्चजनशब्देनोच्यन्ते । कस्मात्, वाक्यशेषात् 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः' इत्यादिवाक्यशेषस्थत्वादित्यर्थः ॥

नन्वस्तु माध्यंदिनानां प्राणादिष्वन्नस्याम्नानात्पञ्चसंख्या ।

काण्वानां तु तदनाम्नानात्कथं पञ्चसंख्येत्यत आह्—

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

एकेषां काण्वानामसत्यन्ने 'तद्देवा ज्योतिषां ज्योतिः' इत्यादिपूर्ववाक्यस्थज्योतिषा पञ्चत्वं पूरणीयम् । अतः प्रधानमशब्दमिति सिद्धम् ॥

इत्थमधिकरणत्रयेण प्रधानस्याशब्दत्वसाधनेन ब्रह्मणि वेदान्तानां समन्वयः साधितः । अधुना तेषामेव परस्परवि-

४. कारणत्वाधिकरणम् । रुद्धार्थप्रतिपादकत्वेनानिश्चायकत्वादनुमान-सिद्धप्रधानपर एवोक्तसमन्वयोऽस्त्वित्याक्षेपसंगत्या, पूर्वं पञ्चत्वसंख्यापूरणमन्नेन ज्योतिषा वेति विकल्पस्याविरोधेऽपि प्रकृते कारणे वस्तुनि विकल्पायोगाद्विरोधे सत्यप्रामाण्यं वाक्यानामिति प्रत्युदाहरणलक्षणावान्तरसंगत्या चेदमाह्—

## कारणत्वेन चाकाशादिषु यथा-व्यपदिष्टोक्तेः ॥ १४ ॥

अत्र पूर्वोत्तरयोः पक्षयोः समन्वयासिद्धिः, तत्सिद्धिरिति फलभेदः । अत्र जगत्कारणत्वादिवाक्यानि ब्रह्मणि मानं न वेति विशये, तेषां परस्परविरोधदर्शनान्न मानमिति पूर्वः पक्षः । सिद्धान्तस्तु— चशब्दः शङ्कानिरासार्थः । ब्रह्मणः

कारणत्वे विरोधो नास्ति । कुतः, आकाशादिषु यथाव्यपदिष्टोक्तेः यथाभूत ईश्वरः कारणत्वेन व्यपदिष्ट एकस्मिन्वेदान्तवाक्ये तथाभूतस्यैवापरस्मिन्वाक्येऽप्युक्तेरभिधानादित्यर्थः ॥

ननु क्वचिदसतः क्वचित्सत उत्पत्तिश्रवणाद्विरोध इत्याशङ्क्याह—

## समाकर्षात् ॥ १५ ॥

'असदेवेदमग्र आसीत्' इत्यनभिव्यक्तनामरूपवाचिना असच्छब्देन सत एव समाकर्षात् नासतः कारणत्वशङ्कावकाशः । अतो जगत्कारणत्ववादिवाक्यसमन्वयो ब्रह्मण्येवेति सिद्धम् ॥

पूर्वमेकवाक्यस्थसच्छब्दबलादसच्छब्दो नीतः । इह तु वाक्यभेदात् 'ब्रह्म ते ब्रवाणि' इति बालाकिवाक्यस्थब्रह्मशब्देन प्राणादिशब्दो ब्रह्मपरत्वेन नेतुमशक्य इति प्रत्युदाहरणसंगत्येदमाह—

## जगद्वाचित्वात् ॥ १६ ॥

अत्र पूर्वपक्षे वाक्यस्य प्राणाद्युपासनापरत्वाद्ब्रह्मणि समन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । कौषीतकिब्राह्मणे श्रूयते—'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः'

५. बालाक्यधिकरणम् ।

इति । तत्र वेदितव्यः कर्ता किं प्राणः, उत जीवः, आहोस्वित्परमात्मेति विशये, 'यस्य वैतत्कर्म' इति चलनात्मककर्मणः प्राणस्यैव संभवात् 'एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते' इति जीवलिङ्गाच्च प्राणजीवाविति पूर्वः पक्षः। सिद्धान्तस्तु—पुरुषाणां कर्ता परमात्मैव। कुतः, 'ब्रह्म ते ब्रवाणि' इति ब्रह्मण एवोपक्रमात् । क्रियत इति व्युत्पत्त्या कर्मशब्दस्य प्रत्यक्षाद्युपस्थापितजगद्वाचित्वात् । ननु पुरुषाणां जगदन्तर्भावात्तत्कर्तृत्वं किमिति पृथगुच्यत इति चेत् , न। बालाकिना ब्रह्मत्वेनोक्तपुरुषाणामब्रह्मत्वद्योतनाय गोबलीवर्दन्यायेन पृथगुच्यत इति ध्येयम ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ १७ ॥

जीवमुख्यप्राणलिङ्गाच्च न ब्रह्मपरत्वावधारणमिति चेत् , तद्व्याख्यातं प्रतर्दनाधिकरणे 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इति । प्रतर्दनविचारे कर्मपदस्याविचारादगतार्थता द्रष्टव्या ॥

किं च—

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥

जैमिनिराचार्योऽस्मिन्प्रकरणे जीवपरामर्शमन्यार्थं ब्रह्मप्र-

तिपत्त्यर्थं यतो मन्यतेऽतो ब्रह्मपरमेवेदं वाक्यम्। कुतो मन्यते, प्रश्नव्याख्यानाभ्याम्। 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्' इत्यादिप्रश्नः, 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्युत्तरं व्याख्यानम्। ताभ्यां यस्मिञ्जीवस्य स्वापागमने भवतः, स एवात्र परमात्मा वेदितव्यतयोपदिष्टः। अपि चैके वाजसनेयिनो बालाक्यजातशत्रुसंवादे 'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्' 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति प्रश्नोत्तराभ्यां स्पष्टं विज्ञानमयातिरिक्तं परमात्मानमामनन्ति। अत एतत्कौषीतकीवाक्यं जगत्कर्तरि ब्रह्मणि समन्वितमिति सिद्धम् ॥

पूर्वं ब्रह्मोपक्रमसामर्थ्याद्ब्रह्मपरत्वमुक्तम्। तर्हि तद्वदेव मैत्रेयीब्राह्मणस्य 'न वा अरे पत्युः कामाय' इत्यादिजीवोपक्रमसामर्थ्याज्जीवपरत्वमस्त्विति दृष्टान्तसंगत्येदमाह—

## वाक्यान्वयात् ॥ १९ ॥

फलं पूर्ववत्। बृहदारण्यके श्रूयते—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः' इत्यादि। तत्र किं जीवो द्रष्टव्यत्वादिरूपेणोपदिश्यते, किं वा परमात्मेति संशये, जीव इति पूर्वः पक्षः। सिद्धान्तस्तु—

६. वाक्यान्वयाधिकरणम्।

परमात्मैवात्र द्रष्टव्यतयोपदिष्ट आत्मा । कुतः, वाक्यान्वयात् उपक्रमादिपर्यालोचनया वाक्यस्य ब्रह्मण्येवान्वयादित्यर्थः ॥

ननु पतिजायादिभोग्यजातेन लिङ्गेन जीवोपक्रमः प्रतीयते ; स कथमित्याशङ्क्याह—

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥**

जीवब्रह्मणोर्हि कार्यकारणयोर्भेदाभेदौ वर्तेते । अत्यन्तभेदे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधप्रसङ्गात् । तथा च तत्प्रतिज्ञासिद्धेरिममभेदांशमादाय जीवोपक्रमणं लिङ्गमित्याश्मरथ्य आचार्यो मन्यते ॥

समाधानान्तरमाह—

**उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥**

संसारदशायामत्यन्तं ब्रह्मणो भिन्नस्य जीवस्य ब्रह्मात्मत्वसाक्षात्कारात्कार्यकारणसंघातादुत्क्रमिष्यतः एवंभावात् परमात्मनैकीभावात्, भविष्यदभेदमादाय जीवोपक्रम इति औडुलोमिराचार्यो मन्यते ॥

नन्विदमप्यसंगतम्, सत्यकार्यकारणसंघातवतः संसारिणोऽत्यन्तं ब्रह्मभिन्नस्य मुक्तिदशायामभेदायोगादित्यरुच्या परमं समाधानमाह—

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

ब्रह्मण एवाविद्याकल्पितभेदेन जीवरूपेणावस्थितेः जीवोपक्रमोऽविरुद्ध इति काशकृत्स्न आचार्यः श्रुतितात्पर्यज्ञो मन्यते । अतो द्रष्टव्ये परब्रह्मणि मैत्रेयीब्राह्मणवाक्यं समन्वितमिति सिद्धम् ॥

पूर्वम् 'जन्माद्यस्य यतः' इति सूत्रे ब्रह्मणो जगत्कारणत्वमभिहितम् । तदधुनात्र विचार्यते । एवं च सामान्यज्ञानस्य विशेषविचारहेतुत्वात्तेन हेतुहेतुमद्भावसंगत्येदमाह—

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

अत्र पूर्वपक्षे एकविज्ञानात्सर्वविज्ञानप्रतिज्ञाया गौणत्वम्, सिद्धान्ते तन्मुख्यत्वमिति फलभेदः । तत्र किं ब्रह्मणो जगन्निमित्तत्वमात्रम्, उतोपादानत्वमपीति संशये, 'तदैक्षत' इति ईक्षणपूर्वककर्तृत्वश्रवणान्निमित्तत्वमात्रमिति पूर्वः पक्षः। सिद्धान्तस्तु—प्रकृतिश्च ब्रह्म चकारान्निमित्तमपि । कुतः, प्रतिज्ञादृष्टान्तानुपरोधात् 'येनाश्रुतं श्रुतं भवति' इत्याद्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणम्' इत्यादिदृष्टान्तश्च । तयोः सामञ्जस्यादित्यर्थः ॥

७. प्रकृत्यधिकरणम् ।

किं च—

**अभिध्योपदेशाच्च ॥ २४ ॥**

'सोऽकामयत' इत्यात्मनो ध्यानोपदेशात्कर्तृत्वम, 'बहु स्याम्' इति ध्यानोपदेशात्प्रकृतित्वम इति ॥

प्रकृतित्वे हेत्वन्तरमाह—

**साक्षाच्चोभयाम्नानात् ॥ २५ ॥**

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इत्याकाशशब्देन साक्षाद्ब्रह्म गृहीत्वा जगदुत्पत्तिप्रलययोरुभयोराम्नानाद्ब्रह्म प्रकृतिरित्यर्थः ॥

नन्वेकस्य कृतिमत्वं कृतिविषयत्वं च विरुद्धमित्याशङ्क्याह—

**आत्मकृतेः परिणामात् ॥ २६ ॥**

'तदात्मानं स्वयमकुरुत' इति आत्मानमिति द्वितीयया कृतिविषयत्वं स्वयमकुरुत इत्यनेन कृतिमत्त्वं चाम्नायते । तथा च ब्रह्मण उपादानत्वं निमित्तत्वं चाविरुद्धम् । कुतः, आत्मकृतेः आत्मसंबन्धिनी कृतिरात्मकृतिः, ततो हेतोः । नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं कृतिकर्मत्वमत आह— परिणामात् । परिणामो विवर्तः ; सिद्धस्यापि विवर्तात्मना साध्यत्वात्कर्मत्वोपपत्तिरित्यर्थः ॥

किं च—

## योनिश्च हि गीयते ॥ २७ ॥

'यद्भूतयोनिं परिपश्यन्ति' इति प्रकृतिवाचकयोनिशब्देन आत्मा हि यस्माद्गीयते, तस्मात् प्रकृतिः ब्रह्मेत्यतो ब्रह्मणः प्रकृतित्वं कर्तृत्वं च सिद्धम् ॥

इत्थमभिहितेन न्यायेन 'ईक्षतेर्नाशब्दम्' इत्यादिना अशब्दत्वादिहेतुभिः प्रधानकारणवादो यथा निराकृतः, न तथेहाणुस्वभावासत्कारणवादः; तेषामपि कारणत्वबोधकशब्दानां श्रुतत्वादिति प्रत्युदाहरणसंगत्येदमाह—

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

अत्र पूर्वपक्षे ब्रह्मण्येव वेदान्तसमन्वयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। अत्र वेदान्ता विषयः। तत्र किं

८. सर्वव्याख्याताधिकरणम्।

ब्रह्मण इव परमाणुशून्यादीनामपि कचिज्जगत्कारणत्वं श्रुतमस्ति, अथवा सर्वत्र ब्रह्मण एव सर्वकारणत्वं प्रतिनियतमिति संशये, 'अण्व्य इवेमा धानाः' 'असदेवेदमग्र आसीत्' 'स्वभावमेके' इत्यादिषु अण्वादीनामपि कारणत्वं श्रुतमिति पूर्वः पक्षः। सिद्धान्तस्तु—एतेन प्रधानवादनिराकरणे ये हेतवः अशब्दत्वाचेतनत्वैकविज्ञानप्रतिज्ञानुपपत्त्यादयः तेषामण्वादिपक्षेऽपि साम्येन,

सर्वेऽण्वादिकारणवादा निराकृतत्वेन व्याख्याताः । न चासदित्यादिशब्दविरोधः । असच्छब्दस्य अनभिव्यक्तनामरूपपरत्वेनाविरोधात् । सूक्ष्मत्वाच्चात्मन्यणुशब्दो गौणः । स्वभाववादस्तु पूर्वपक्षत्वेनोपन्यस्तः । व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्त्यर्थः । तस्माज्जगत्कारणे सर्वज्ञे जिज्ञास्ये ब्रह्मणि वेदान्तानां समन्वयो नान्यत्रेति सिद्धम् ॥

चतुस्त्रिंशत्परं सूत्रशतकं तु समन्वये ।
अध्याये तद्वदेकोनचत्वारिंशन्मया मताः ॥

ब्रह्मनाम्नि परे धाम्नि प्रत्यपादि समन्वयः ।
त्रय्यन्तसंततेर्यस्मिंस्तदस्मिञ्ज्योतिराततम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्जसेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां

प्रथमोऽध्यायः ॥



ॐ

# द्वितीयोऽध्यायः ॥



इत्थं प्रथमेऽध्यायेऽभिहितसमन्वयस्य स्मृत्यादिविरोधे तन्निरसनमनेन क्रियत इति विषयविषयिभावसंगत्या द्वितीयाध्याय आरभ्यते। अत्र पूर्वमतिदेशाधिकरणे प्रधानवदशब्दत्वमण्वादीनामप्यभिहितम्। अधुना प्रधानस्य वैदिकशब्दवत्त्वाभावेऽपि स्मृतिरूपशब्दवत्त्वमाक्षिप्य परिह्रियत इत्याक्षेपसंगत्येदमाह—

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥**

अत्र पूर्वपक्षे स्मृतिविरोधे समन्वयासिद्धिः, सिद्धान्ते तदविरोधे तत्सिद्धिरिति फलभेदः। उक्तसमन्वयः किं सांख्यस्मृत्या विरुध्यते, उत नेति संदेहे, महर्षिप्रणीतप्रधानकारणवादिस्मृतीनामनवकाशरूपदोषप्रसङ्गात्समन्वयो विरुध्यत इति प्रधानानुगुणतया श्रुतयो नेया इति चेदिति पूर्वः पक्षः। सिद्धान्तस्तु— न

१. स्मृत्यधिकरणम्।

समन्वयो विरुध्यते । कुतः, अन्यस्मृत्यनवकाशदोषप्रसङ्गात् चेतनं प्रकृत्य 'तस्माद्व्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इत्यादिकानां चेतनकारणत्ववादिनीनामन्यासां स्मृतीनामनवकाशदोषः प्रसज्येत । अतः स्मृतिद्वयविरोधे श्रुत्यविरुद्धा स्मृतिः प्रमाणमित्यप्रमाणसांख्यस्मृत्या समन्वयो न विरुध्यत इत्यर्थः ॥

इतश्च सांख्यस्मृतेरनवकाशो न दोष इत्याह—

**इतरेषां चानुपलब्धेः ॥ २ ॥**

सांख्यस्मृतिप्रसिद्धानामितरेषां महदादितत्त्वानां लोके वेदे चानुपलब्धेश्च सांख्यस्मृतेरप्रामाण्यान्न दोषः । तथा च तदेकदेशप्रधानस्मृतेरप्यप्रामाण्यमिति भावः ॥

उक्तन्यायमन्यत्रातिदिशति—

**एतेन योगः प्रत्युक्तः ॥ ३ ॥**

अस्यातिदेशत्वान्न पृथक्संगत्यपेक्षा । फलं तु पूर्ववत् । उक्तसमन्वयः किं योगस्मृत्या विरुध्यते न वेति संदेहे, श्रुतिसिद्धयोगप्रतिपादकत्वेन प्रामाण्यात्तया प्रधानकारणवादिन्या समन्वयो विरुध्यत इति पूर्वः पक्षः । सिद्धान्तस्तु— एतेन सांख्यस्मृतिप्रत्या-

२. योगप्रत्युक्त्यधिकरणम् ।

ख्यानेन योगस्मृतिरपि प्रत्युक्ता प्रत्याख्याता द्रष्टव्या। श्रुत्य-विरुद्धाष्टाङ्गयोगे तात्पर्यवत्त्वेन प्रामाण्येऽपि तद्विरुद्धप्रधाने तात्पर्याभावादप्रामाण्यमिति भावः॥

पूर्वं वेदविरुद्धस्मृतेर्मूलाभावादप्रामाण्यमुक्तम्। तर्हि तर्कस्य व्याप्तिपक्षधर्मतयोर्मूलत्वेन लोकसिद्धत्वात्तेन विरोध इति प्रत्युदाहरणसंगत्येदमाह—

## न विलक्षणत्वादस्य तथात्वं च शब्दात्॥ ४॥

अत्र पूर्वोत्तरपक्षयोः समन्वयासिद्धिः, तत्सिद्धिरिति फल-भेदः। आकाशादिकं न चेतनप्रकृतिकम्, द्रव्यत्वाद्घटवत्; इति तर्केण समन्वयो विरुध्यते न वेति संदेहे, पूर्वः पक्षः— न जगत् चेतनप्रकृ-तिकम्। कुतः, विलक्षणत्वात् अस्य अचेतनस्य जगतः चेत-नाद्विक्षणत्वात्। यत् यद्विलक्षणं न तत् तत्प्रकृतिकम्; यथा तन्तुविलक्षणो घटो न तन्तुप्रकृतिक इति। ननु ब्रह्मजगतो-र्वैलक्षण्यं कुतः— तथात्वं च शब्दात्। तथात्वं वैलक्षण्यम 'विज्ञानं चाविज्ञानं चाभवत्' इत्यादिश्रुतितोऽवगतमित्यर्थः॥

(३. विलक्षणत्वाधिकरणम्।)

ननु 'ते हेमे प्राणा अहंश्रेयसे विवदमानाः' इत्यादिकाभिः श्रुतिभिर्ब्रह्मवत् जगत् चेतनमिवावगम्यत इत्याशङ्क्याह—

**अभिमानिव्यपदेशस्तु विशेषानु-गतिभ्याम् ॥ ५ ॥**

उक्तशङ्कानिरासार्थस्तुशब्दः। उक्तश्रुतिभिर्न जगतश्चेतनत्वं प्रत्येतव्यम्। यतः प्राणाद्यभिमानिनीनां देवतानां तत्र व्यपदेशो भवति, न प्राणादिमात्रस्य। कुतः, विशेषानुगतिभ्यां विशेषणं विशेषः अनुगतिश्च ताभ्याम्। 'एता ह वै देवता अहंश्रेयसे विवदमानाः....' इति प्राणानां चेतनवाचिना देवताशब्देन विशेषितत्वात्, 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इत्यादिमन्त्रार्थवादादिषु सर्वत्र तदभिमानिदेवतानामनुगतिश्रवणाच्च न चेतनं जगत्। तस्मादचेतनस्य जगतो वैलक्षण्यान्न चेतनप्रकृतिकत्वम् ॥

एवं पूर्वपक्षे सिद्धान्तः—

**दृश्यते तु ॥ ६ ॥**

पूर्वपक्षनिरासार्थस्तुशब्दः। यदुक्तं चेतनविलक्षणं जगन्न तत्प्रकृतिकमिति, तन्न; चेतनात्पुरुषात्तद्विलक्षणानां नखलोमादीनामचेतनानाम्, अचेतनाच्च गोमयाच्चेतनवृश्चिकादीनामुत्पत्तिर्यतो दृश्यतेऽत इत्यर्थः। प्रकृतिविकारयोरत्यन्तसादृश्ये प्रकृतिविकारभावानुपपत्त्या यत्किंचित्सादृश्यं वाच्यम्। तच्च प्रकृतेऽपि जगति स्फुरणाद्यनुवृत्त्या समानमिति भावः ॥

असत्कार्यवादमाशङ्क्य निराचष्टे—

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥**

चेतनस्य नामरूपादिहीनस्याचेतननामादिमज्जगद्धेतुत्वे उत्पत्तेः पूर्वं जगदसदेव स्यादिति चेत्, न । कुतः, प्रतिषेधमात्रत्वात् असत्स्यादिति योऽयं प्रतिषेधः तन्मात्रत्वात्, न तु तस्य प्रतिषेध्यमस्तीत्यर्थः । कार्यसत्तायाः कारणाव्यतिरेकात्स्थितिदशायामिवोत्पत्तेः पूर्वमपि ब्रह्मात्मकमेवेदं जगन्नासदिति भावः ॥

जगद्ब्रह्मणोरुक्तं कार्यकारणत्वममृष्यमाणश्चोदयति—

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥**

शुद्धत्वादिगुणकं ब्रह्म जगदुपादानमित्यसमञ्जसम् । कुतः, अपीतौ तद्वत्प्रसङ्गात् अपीतौ प्रलयसमये तद्वत् कार्यवत् कारणस्यापि ब्रह्मणोऽशुद्धत्वादिः प्रसज्येतेत्यर्थः । प्रलयेऽशुद्ध्यादिगुणकं जगत् ब्रह्मणि लीयमानं स्वनिष्ठाशुद्ध्यादिधर्मैर्ब्रह्म दूषयेदिति भावः ॥

एवमाक्षेपे परिहरति—

**न तु दृष्टान्तभावात् ॥ ९ ॥**

तुरेवकारार्थः । पूर्वोक्तमसमञ्जसं नास्त्येव । कुतः, दृष्टा-

न्तभावात् कार्यं कारणे लीयमानं स्वधर्मेण कारणं न दूषयतीत्यस्मिन्नर्थे शतशो दृष्टान्तानां यथा घटादिकं कार्यं मृदि लीयमानं मृदं स्वधर्मेण न दूषयतीत्येवमादिकानां सत्त्वादित्यर्थः ॥

इत्थं स्वपक्षे दोषान्परिहृत्य तानेव परपक्षे योजयति—

**स्वपक्षदोषाच्च ॥ १० ॥**

ये दोषाः विलक्षणत्वात् प्रकृतिविकारभावानुपपत्तिः, उत्पत्तेः प्राक् जगतोऽसत्त्वप्रसङ्गः, अपीतौ तद्वत्प्रसङ्ग इति सांख्येनोद्भाविताः ; ते सांख्यपक्षेऽपि समानाः ; शब्दादिहीनप्रधानसकाशाच्छब्दादिमतो विलक्षणस्य जगत उत्पत्त्यङ्गीकारादित्यर्थः । वस्तुतः प्रपञ्चसत्यत्ववादिनः सांख्यस्यैवैते दोषाः, न मेऽनिर्वचनीयवादिन इति भावः ॥

इतश्च न केवलेन तर्केण समन्वयो विरुध्यत इत्याह—

**तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥**

यन्नत एकेन तार्किकेणानुमितोऽप्यर्थोऽन्येन श्रेष्ठतरेणान्यथा नीयत इति केवलस्य तर्कस्य अप्रतिष्ठानादपि अप्रतिष्ठितत्वाच्च न तेन समन्वयविरोधशङ्केत्यर्थः । ननु कस्यचित्तर्कस्याप्रति-

ष्ठितत्वेऽपि कस्यचित्प्रतिष्ठितत्वसंभवात्तेन समन्वयविरोधशङ्का युक्तेत्याक्षिपति—अन्यथानुमेयमिति चेत्। अप्रतिष्ठिततर्कादन्येन प्रकारेण प्रतिष्ठिततर्केण समन्वयविरोधादिकमनुमेयमिति चेत्, अत्र समाधत्ते— एवमपि । अन्यत्र तर्कस्य प्रतिष्ठितत्वेऽपि प्रकृते लिङ्गादिहीने ब्रह्मणि वेदनिरपेक्षस्य तर्कस्याप्रतिष्ठितत्वदोषादनिर्मोक्षप्रसङ्गः । यद्वा महतां कपिलकणादादीनां परस्परविप्रतिपन्नैः आगमनिरपेक्षैस्तर्कैस्तत्त्वनिर्णयाभावादनिर्मोक्षप्रसङ्गः । तस्मादागमविरोधितर्कोऽप्रमाणमिति न तेन विरोध इति सिद्धम् ॥

उक्तन्यायमन्यत्रातिदिशति—

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

अस्यातिदेशत्वान्न पृथक्संगत्यपेक्षा । फलं तु पूर्ववत् । ब्रह्म न जगदुपादानं विभुत्वाद्व्योमवत् इत्यादितार्किकाभि-

४. शिष्टापरिग्रहा- मतन्यायेन ब्रह्मकारणत्वबोधकः समन्वयोधिकरणम् । विरुध्यते न वेति संदेहे, विरुध्यत इति पूर्वः पक्षः। सिद्धान्तस्तु— एतेन मन्वादिभिः शिष्टैः केनचित्सत्कार्यवाद्यंशेन परिगृहीतप्रधानवादनिराकरणप्रकारेण शिष्टापरिग्रहाः शिष्टैः केनचिदप्यंशेनापरिगृहीता अण्वादिकार-

णवादाः व्याख्याताः निरस्ता द्रष्टव्याः । अतस्तार्किकन्यायस्य वेदबाधितत्वान्न तेन विरोध इति सिद्धम् ॥

पूर्वं ब्रह्मणि तर्कस्याप्रतिष्ठितत्वेऽपि जगद्भेदे प्रत्यक्षस्य प्रतिष्ठितत्वाद्विरुध्यत एवेति प्रत्युदाहरणसंगत्येदमाह—

**भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥**

फलं तु पूर्ववत् । अद्वितीयब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयः प्रत्यक्षेण विरुध्यते न वेति संदेहे, अद्वितीयब्रह्मणो जगदुपादानत्वे भोक्तृभोग्यप्रपञ्चस्य सर्वस्य ब्रह्मात्मकत्वेन भोग्यशब्दादेर्भोक्त्रात्मकत्वापत्तेः भोक्तुर्भोग्यात्मकत्वापत्तेः प्रत्यक्षसिद्धः परस्परविभागो न स्यात् । अतः प्रत्यक्षेण समन्वयो विरुध्यत इति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु— स्याल्लोकवत् । एकब्रह्मोपादानकत्वेऽपि भोक्तृभोग्यप्रपञ्चस्य परस्परं विभागः स्यात्, लोकवत्; यथा लोके मृदात्मना अभिन्नानां घटादीनां परस्परं भेदोऽस्ति तद्वत् । अतः कल्पितभेदसत्त्वान्न प्रत्यक्षविरोध इति सिद्धम् ॥

५. भोक्त्रापत्त्य-धिकरणम् ।

पूर्वं परिणामवादमालम्ब्यापाततः स्याल्लोकवदिति समाधानमभिहितम् । अधुना विवर्तवादमाश्रित्य परमं समाधानमभिधीयत इत्येकफलकत्वसंगत्येदमाह—

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

फलं तु पूर्ववत् । अद्वैतब्रह्मवादिसमन्वयो भेदग्राहिप्रत्यक्षेण विरुध्यते न वेति संदेहे, विरुध्यत इति पूर्वः पक्षः ।

६. आरम्भणाधिकरणम् ।

सिद्धान्तस्तु—तत् तस्मात्कारणात् ब्रह्मणः, कार्यस्य जगतोऽनन्यत्वं पृथक्सत्ताराहित्यम् । कुतः, आरम्भणशब्दादिभ्यः 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' 'ब्रह्मैवेदं सर्वम्' इत्यादिशब्देभ्यः ॥

ब्रह्मव्यतिरेकेण कार्यस्याभावेऽनुमानमाह—

## भावे चोपलब्धेः ॥ १५ ॥

कारणस्य ब्रह्मणो भावे सत्त्वे कार्यस्योपलब्धेः, मृदि सत्यां घटस्येव । न हि मृद्व्यतिरेकेण घटो नाम कश्चिदुपलभ्यते । अतः कारणव्यतिरेकेण कार्यं नास्तीत्यर्थः ॥

कारणव्यतिरेकेण कार्यस्याभावे श्रुतार्थापत्तिं प्रमाणान्तरमाह—

## सत्त्वाच्चावरस्य ॥ १६ ॥

अवरस्य कार्यस्योत्पत्तेः प्राक्कारणानन्यत्वेन सत्त्वात् 'ब्रह्म

वा इदमग्र आसीत्' इत्यादौ सत्त्वश्रवणात् उत्पत्त्यनन्तरमप्यनन्यत्वं सिद्धमित्यर्थः ॥

प्रागुत्पत्तेः कारणात्मना कार्यस्य सत्त्वमाक्षिप्य समाधत्ते—

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

'असद्वा इदमग्र आसीत्' इत्यादिना प्रागुत्पत्तेरसद्व्यपदेशान्न कार्यस्य कारणात्मना सत्त्वमिति चेत, न ह्यत्यन्तासत्त्वाभिप्रायेणायमसत्त्वव्यपदेशः । किंतु व्याकृतत्वरूपधर्मापेक्षया अव्याकृतत्वं धर्मान्तरम, तेनायमसत्त्वव्यपदेशः । कुतः, वाक्यशेषात् 'तत्सदासीत्' इति वाक्यशेषात् । अतः कारणादनन्यत्वं कार्यस्य सिद्धमित्यर्थः ॥

किं च—

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

मृदात्मना पूर्वं घटस्यासत्त्वे मृदेव घटार्थिना नोपादीयेत, असत्त्वाविशेषाद्यत्किंचिदेवोपादीयेत, इत्येवमाद्याया युक्तेः, 'सदेव सोम्येदमग्र आसीत्' इत्येवमादौ विद्यमानसच्छब्दान्तराच्च प्रागुत्पत्तेः कार्यस्य कारणानन्यत्वं सत्त्वं चेति सिद्धम् ॥

ननु मृद्घटौ भिन्नौ विलक्षणप्रतीतिविषयत्वात् घटपटवत् इत्युक्ते हेतोर्व्यभिचारमाह—

**पटवच्च ॥ १९ ॥**

यथा संवेष्टितप्रसारितपटस्य विलक्षणप्रतीतिविषयत्वेऽपि न भेदस्तथा मृद्घटयोरित्यर्थः ॥

ननु कार्यमुपादानाद्भिन्नम्, भिन्नकार्यकरत्वात्संमतवत् इत्युक्ते, हेतोर्व्यभिचारमाह—

**यथा च प्राणादि ॥ २० ॥**

यथा च प्राणायामादिना निरुद्धः प्राणापानादिर्जीवनमात्रं कार्यं निष्पादयति, अनिरुद्धस्त्वाकुञ्चनप्रसारणादिकं कार्यं निर्वर्तयति, नैतावता प्राणादेर्भेदोऽस्ति । तस्मात्कार्यकारणयोरनन्यत्वादद्वैतब्रह्मसमन्वये न कश्चिद्विरोध इति सिद्धम् ॥

पूर्वं कार्यस्य कारणादनन्यत्वमेकविज्ञानप्रतिज्ञासिद्धये समर्थितम् । तर्हि तेनैव न्यायेन जीवब्रह्मणोरप्यभेदाज्जीवधर्मा हिताकरणादयो ब्रह्मणि प्रसज्येरन्नित्याक्षेपसंगत्येदमाह—

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥**

फलं तु पूर्ववत् । यदि ब्रह्म जगज्जनयेत्, न तर्हि स्वानिष्टं

जनयेदिति तर्केण जीवाभिन्नं ब्रह्म जगदुपादानमिति ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे, पूर्वः पक्षः—

७. इतरव्यपदेशाधिकरणम् ।

इतरव्यपदेशात् इतरस्य जीवस्य तत्त्वमस्यादिना ब्रह्मत्वव्यपदेशात्, इतरस्य ब्रह्मणो वा 'अनेन जीवेनात्मनानुप्रविश्य' इत्यादिना शारीरत्वव्यपदेशात्, ब्रह्मणः स्रष्टृत्वे जीवस्यैव स्रष्टृत्वात् हिताकरणादिदोषप्रसक्तिः नञ्व्यत्यासेन अहितजरामरणादिबहुविधानर्थकरणरूपदोषस्य प्रसक्तिर्ब्रह्मणः— इत्यतस्तस्याभ्रान्तचेतनत्वेनानिष्टजगज्जनकत्वायोगादुक्तसमन्वयो विरुध्यत इत्यर्थः ॥

एवं पूर्वपक्षे सिद्धान्तः—

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यतः शारीरादधिकं सर्वज्ञं सर्वशक्ति ब्रह्म जगदुपादानं स्रष्टृ चेति ब्रूमः, अतो न हिताकरणादिदोषप्रसक्तिः । कुतः, भेदनिर्देशात् 'आत्मा वा अरे द्रष्टव्यः' इत्यादिना कल्पितभेदस्य व्यपदेशात् । न हि ब्रह्मणो नित्यमुक्तस्य हितमहितं वा किंचित्समस्ति, येन हिताकरणादिदोषः प्रसज्येत । अतः कल्पितभेदमादायैव सर्वस्यासांकर्योपपत्तिरिति तात्पर्यम् ॥

नन्वेकरूपब्रह्मणो जगत्कारणत्वे कार्यवैचित्र्यं न स्यादिति

दोषं दृष्टान्तेन परिहरति—

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

एकपृथिवीजन्यानां यथा अश्मनां वज्रवैडूर्यादिभेदेन वैचित्र्यम्, तथा ब्रह्मकार्याणां स्वरूपवैचित्र्यं युज्यते। अतस्तदनुपपत्तिः तस्योक्तदोषस्यानुपपत्तिः। तस्मात् जीवाभिन्नब्रह्मवादिसमन्वयो न विरुध्यत इति सिद्धम् ॥

पूर्वम् औपाधिकजीवभेदाद्धिताकरणादिदोषो नास्तीत्युक्तम्। संप्रत्युपाधितोऽपि ब्रह्मणो विभक्तं करणादिकं नास्ति, ब्रह्मनानात्वाभावादिति प्रत्युदाहरणसंगत्येदमाह—

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

८. उपसंहारदर्शनाधिकरणम्।

फलं तु पूर्ववत्। न ब्रह्म उपादानं कर्तृ वा, असहायत्वात्संमतवदिति न्यायेन असहायाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे, उपसंहारदर्शनात् लोके कुलालस्य कर्तुः दण्डचक्राद्युपसंहारदर्शनात्, मृदो वा उपादानस्य स्वभिन्नकुलालादिसहायदर्शनात्, तदुभयाविलक्षणस्य ब्रह्मणो न जगत्कर्तृत्वमुपादानत्वं वा संभवति। अतः समन्वयो विरुध्यत इति चेदिति पूर्वः पक्षः। सिद्धान्तस्तु— क्षीरवद्धि हिशब्दो

हेत्वर्थः । यथा लोके क्षीरं बाह्यसाधनान्यनपेक्ष्य दध्याकारेण परिणमते, तद्वद्ब्रह्मापि । श्रुतिरपि ब्रह्मणोऽसहायस्य कार्यकारित्वं दर्शयति 'न तस्य कार्यं करणं च विद्यते' इति ॥

ननु चेतनत्वे सति असहायत्वं हेतुः । अतो न क्षीरे व्यभिचार इत्याशङ्क्य चेतनदृष्टान्तेन तस्य व्यभिचारमाह—

**देवादिवदपि लोके ॥ २५ ॥**

लोक्यतेऽनेनेति लोकः शब्दो मन्त्रार्थवादेतिहासपुराणादिः, तस्मिन् यथा देवाः पितर ऋषय इत्येवमादयश्चेतनाः स्वसिद्धिसामर्थ्यात्साधनान्तरं बाह्यमनपेक्ष्य संकल्पमात्रेणैव नानाविधकार्यकर्तार उपलभ्यन्ते, तद्वद्ब्रह्माप्यसहायमेव जगदुपादानं कर्तृ चेति तद्वादिसमन्वयो न विरुध्यत इति सिद्धम् ॥

पूर्वं क्षीरादिदृष्टान्तकथनेन ब्रह्मणः परिणामित्वभ्रमोत्पत्तेः तन्निरसनमनेन क्रियत इति कार्यकारणभावसंगत्येदमाह—

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥**

पूर्वाधिकरणस्य भ्रमोत्पादकत्वमेव कारणत्वम्, एतस्य कार्यत्वमिति बोध्यम् । फलं तु पूर्ववत् । सावयवस्यैव नाना-

१. कृत्स्नप्रसक्त्य- कारेण परिणाम इति न्यायेन निरवयवाधिकरणम् । ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते

न वेति संदेहे, पूर्वः पक्षः— सिद्धान्ती प्रष्टव्यः— किं ब्रह्म निरवयवं परिणमते सावयवं वा। आद्ये, कृत्स्नस्य ब्रह्मणः कार्याकारेण परिणामप्रसक्तिः, ततश्च कार्यातिरिक्तं ब्रह्म न स्यात्। द्वितीये तु, कृत्स्नप्रसक्तिर्नास्ति, एकांशपरिणामेऽप्यपरांशस्थितिसंभवात्। तथा 'निष्कलम्' इत्यादि निरवयवत्वशब्दकोपः। उभयपक्षेऽप्यनित्यत्वप्रसङ्ग इति ब्रह्मणः उपादानत्ववादिसमन्वयो विरुध्यत इति ॥

सिद्धान्तस्तु—

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुः पूर्वपक्षनिरासार्थः। न तावत्कृत्स्नप्रसक्तिः। कुतः, श्रुतेः ब्रह्मणो जगदुपादानत्वश्रवणात्। 'तावानस्य महिमा' इत्यादौ कार्यव्यतिरेकेण सत्ताश्रवणात्। एवं च विवर्तवादः श्रुत्यैव स्फुटीकृतः। न हि परिणामवादे कार्यव्यतिरेकेण सत्ता समस्ति। अतः कार्यव्यतिरेकेण ब्रह्मणोऽवस्थानश्रुतेर्नोक्तदोषावकाशः। ननु उक्तयुक्तिबाधितत्वाच्छ्रुतिर्वा कथं कार्यव्यतिरेकेण ब्रह्मणः सत्तां बोधयेदित्यत आह— शब्दमूलत्वात् ब्रह्मणः शब्दैकप्रमाणकत्वात्, यथाशब्दं कार्योपादानत्वं तदतिरेकेण सत्त्वं चाविरुद्धमित्यर्थः ॥

जगतो ब्रह्मविवर्तत्वेन स्वप्नप्रपञ्चवन्मायिकत्वात्तदुपादान-

त्वेऽपि ब्रह्मणो न कृत्स्नप्रसक्त्यादिदोषः स्वप्नसाक्षिण इवेत्याह—

**आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥**

हि यस्माद्धेतोः एकस्मिन्नात्मनि स्वप्नदृशि निरवयवे विचित्राः सृष्टयः श्रूयन्ते 'न तत्र रथा न रथयोगाः' इत्यादौ, यथा च लोके मायाविनि स्वरूपानुपमर्देनैव हस्त्यश्वादिविचित्राः सृष्टयो दृश्यन्ते एवमेकस्मिन्नपि ब्रह्मणि विविधसृष्टिरित्यर्थः ॥

यश्चोभयोः समो दोष इति न्यायेन कृत्स्नप्रसक्त्यादीनामनुद्भाव्यत्वं दर्शयति—

**स्वपक्षदोषाच्च ॥ २९ ॥**

सांख्यादयोऽपि निरवयवं प्रधानं जगत्परिणामीत्यङ्गीचक्रुः । तथा च कृत्स्नप्रसक्त्यादिदोषः समानः । अणुवादिनोऽपि परमाणुद्वयसंयोगेन द्व्यणुकादिसृष्टिमुररीचक्रुः । स संयोगः किं व्याप्यवृत्तिः, अव्याप्यवृत्तिर्वा । आद्ये दृष्टविरोधः । द्वितीये सावयवत्वं विना अव्याप्यवृत्तिसंयोगानुपपत्तिः, निरवयवत्वव्याकोप इत्यादिदोषः समानः । ब्रह्मवादे स दोषो न समस्ति । तस्मादुपपन्नो ब्रह्मकारणवादः ॥

पूर्वोक्तविचित्रकार्यशक्तिमत्त्वविषयशङ्कानिरासेन समर्थना-

त्मकत्वात् विषयविषयिभावंसंगत्येदमाह—

**सर्वोपेता च तद्दर्शनात् ॥ ३० ॥**

फलं तु पूर्ववत् । अशरीरस्य न मायेति न्यायेन माया-शक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे, विरुध्यत इति पूर्वः पक्षः । सिद्धान्तस्तु— सर्वोपेता सर्वशक्तियुक्ता परा देवता । कुतः, तद्दर्शनात् तस्य सर्वशक्तियोगस्य 'सर्वकर्मा सर्वकामः....' इत्यादिश्रुतौ दर्शनादित्यर्थः ॥

१०. सर्वोपेता-धिकरणम् ।

पूर्वपक्षमनुभाष्य दूषयति—

**विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥**

सर्वशक्तियुक्तानामपि देवादीनां चक्षुरादिकरणवतामेव विचित्रकार्यकर्तृत्वमवगम्यते । ब्रह्मणः 'अचक्षुष्कमश्रोत्रम्....' इत्यादिना विकरणत्वावगमान्न कर्तृत्वमिति चेत्, अत्र यदुत्तरं वक्तव्यं तत्पूर्वमेव 'न विलक्षणत्वात्....' 'देवादिवदपि लोके' इत्यादावुक्तम् । अथवा 'अपाणिपादो जवनो ग्रहीता' इत्यादि-श्रुत्या उत्तरमुक्तम् । अतः श्रुत्येकसमधिगम्यत्वान्न तर्केण विरोधशङ्कावकाश इति ॥

पूर्वं श्रुत्यवष्टम्भेन सर्वशक्तिमतो ब्रह्मणः कर्तृत्वमवादि ।

तदाक्षिप्य समाधानादाक्षेपसंगत्येदमाह—

**न प्रयोजनवत्त्वात् ॥ ३२ ॥**

फलं पूर्ववत्। ब्रह्म न फलेन विना सृजति, अभ्रान्तचेतनत्वात्संमतवत् इति न्यायेन अवाप्तसमस्तकामाद्ब्रह्मणो जगत्सर्ग

११. प्रयोजनवत्त्वाधिकरणम्। ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे, पूर्वः पक्षः— न ब्रह्मणो जगत्कर्तृत्वं संभवति, नित्यतृप्तत्वेन प्रयोजनाभिसंधिरहितत्वात्; प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वाभ्युपगमात्समन्वयो विरुध्यत इति ॥

सिद्धान्तस्तु—

**लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥**

तुः पूर्वपक्षनिरासार्थः। यथा लोके राजतदमात्यादीनां फलं विनैव केवललीलारूपाः प्रवृत्तयो दृश्यन्ते, यथा वोच्छ्वासादयः स्वभावादेवोत्पद्यन्ते, तथा ब्रह्मणोऽपि विचित्रकार्यरचना लीलाकैवल्यं केवललीलामात्रम्, न फलसापेक्षम्। कथंचिद्राजादीनां फलसंभवेऽपि नित्यतृप्तस्य ब्रह्मणो लीलामात्रमेतदित्यभिप्रायः ॥

पूर्वं मायामय्या लीलया ब्रह्मणः स्रष्टृत्वमवादि। तदाक्षि-

प्य समाधानादाक्षेपसंगत्येदमाह—

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥**

१२. वैषम्यनैर्घृण्याधिकरणम् ।

फलं पूर्ववत् । यो यो विषमसृष्टिकर्ता स स सावद्य इति न्यायेन निरवद्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे, ब्रह्म किं प्राणिकर्मसापेक्षं जगत्कर्तृ, निरपेक्षं वा । आद्ये, अनीश्वरत्वप्रसङ्गः । द्वितीये, वैषम्यनैर्घृण्ये प्रसज्येयाताम् । कांश्चित्तिर्यगादीनत्यन्तदुःखिन उत्पादयति, कांश्चिन्मनुष्यादीन्सुखदुःखसाधारणान्, कांश्चिद्देवादीन्नित्यसुखिन इति वैषम्यम्, सर्वसंहर्तृत्वाच्च नैर्घृण्यम् । ततश्च तस्य सावद्यत्वं प्रसज्येत । अतो निरवद्यस्य ब्रह्मणो न जगत्कर्तृत्वमिति पूर्वः पक्षः । सिद्धान्तस्तु— न ब्रह्मणो वैषम्यनैर्घृण्ये स्याताम् । कस्मात्, सापेक्षत्वात् प्राणिकर्मसापेक्षत्वात् । कर्मानपेक्षत्वे हि वैषम्यादिदोषः स्यात् । न च सापेक्षत्वेऽनीश्वरत्वप्रसङ्गः, भृत्यादिसेवानुसारेण फलदातू राज्ञो राजत्वदर्शनात् । ननु कस्मात् ब्रह्मणः कर्मसापेक्षत्वमत आह— तथाहि दर्शयति । ‘एष ह्येव साधु कर्म कारयति’ इत्याद्या श्रुतिरित्यर्थः ॥

सापेक्षत्वमाक्षिप्य समाधत्ते—

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

'सदेव सोम्येदमग्र आसीदेकमेव' इत्यादिना सृष्टेः प्रागविभागावधारणान्न तदानीं कर्मास्ति । ततः कर्मापेक्षया विषमा सृष्टिरित्यसंगतमिति चेत्, न; अनादित्वात् संसारस्य बीजाङ्कुरवद्धेतुहेतुमद्भावोपपत्तेरित्यर्थः ॥

ननु कुतः संसारस्यानादित्वमित्याह—

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

संसारस्यानादित्वमुपपद्यते च । अन्यथा अकस्मादेव सृष्ट्यङ्गीकारे मुक्तस्यापि पुनर्जन्मप्रसङ्गात् पूर्वपूर्वसृष्टिसादृश्यानुपपत्तेश्च । उपलभ्यते च संसारस्यानादित्वम् 'धाता यथापूर्वमकल्पयत्' 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा' इति श्रुतिस्मृत्योरित्यर्थः ॥

पूर्वं विषमसृष्टिप्रयोजककर्मणः सत्त्वाद्ब्रह्मणो विषमसृष्टिहेतुत्वमुक्तम् । तद्वदुपादानत्वप्रयोजकगुणवत्त्वस्याभावान्नोपादानत्वमिति प्रत्युदाहरणसंगत्येदमाह—

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

फलं पूर्ववत् । यन्निर्गुणम्, तन्नोपादानं यथा गन्ध इति

न्यायेन निर्गुणाद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विरुध्यते न वेति संदेहे, विरुध्यत इति पूर्वः पक्षः । सिद्धान्तस्तु— जगत्कारणत्वसर्वज्ञत्वादयः कारणधर्मा ये विद्यन्ते, तेषां सर्वेषां पूर्वोक्त-प्रकारेण ब्रह्मण्येवोपपत्तेर्ब्रह्मैव जगत्कारणमित्यर्थः । अयं भावः— यन्निर्गुणं तन्नोपादानमिति व्याप्तौ किं परिणामित्वाभावो व्यापकः, उत विवर्तोपादानत्वाभावः । नाद्यः, इष्टत्वात् । न द्वितीयः, आरोपितनित्यत्वोपादाने जात्यादौ व्यभिचारात् । अतो निर्गुणत्वेऽपि ब्रह्मणो न विवर्तोपादानत्वं विरुद्धम— इति । तस्मान्न कथंचिदपि समन्वयस्य विरोध इति सिद्धम ॥

१३. सर्वधर्मोप-पत्त्यधि-करणम् ।

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्व-
प्रकाशिकायां द्वितीयाध्यायस्य
प्रथमः पादः ॥



ॐ

# द्वितीयः पादः ॥

इत्थं मुमुक्षोः सम्यग्ज्ञानोत्पादके त्रय्यन्तसमन्वये परपरिकल्पितदोषनिरासेन स्वपक्षः स्थापितः । अधुना मुमुक्षोः निर्दोषे अद्वैतदर्शने निर्विचिकित्सप्रवृत्तिसिद्धये परमतदूषणप्रधानः पादोऽयमारभ्यते । एवं च समन्वयविरोधनिरासेन स्वपक्षस्थापनपरप्रथमपादेनास्य परमतनिरासनपरस्य पादस्य उपजीव्योपजीवकभावः संगतिः । सर्वधर्मोपपत्तेश्चेत्यनेन ब्रह्मणि कारणधर्माणामुपपत्तिरुक्ता ; तेषां प्रधान एवोपपत्तिः किं न स्यादित्याक्षिप्य समाधीयत इत्याक्षेपलक्षणावान्तरसंगत्या इदमधिकरणमारभते—

## रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

अत्र पूर्वपक्षे सांख्ययुक्तिविरोधात् समन्वयासिद्धिः, सिद्धान्ते तदविरोधात् तत्सिद्धिरिति फलभेदः । प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो

१. रचनानुपपत्त्यधिकरणम् ।

वेति संदेहे, जगत् सुखदुःखमोहात्मकवस्तूपादानकम्, तद-न्वितत्वात् मृदन्वितघटादिवत्; इत्यनुमानेन यत्सुखाद्यात्मकं सिद्धम्, तदेव त्रिगुणात्मकं प्रधानम्। अतः प्रामाणिकः सांख्यसिद्धान्त इति पूर्वः पक्षः। सिद्धान्तस्तु— नोक्तानुमान-सिद्धं प्रधानं जगदुपादानम्। कुतः, रचनानुपपत्तेः अचेतनात् स्रष्टव्यज्ञानशून्यात् प्रधानात् अनेकविधविचित्र-जगद्रचनानुपपत्तेरित्यर्थः। लोके विचित्रप्रासादादिरचनायाः बुद्धिकुशलशिल्प्यादिकार्यत्वदर्शनादिति भावः। सूत्रे चशब्देन हेतोः स्वरूपासिद्धिं समुच्चिनोति। सुखादीनामान्तरत्व-प्रतिपत्तेः तदन्वितत्वं जगतोऽसिद्धम्। तस्मान्न प्रामाणिकः सांख्यसिद्धान्त इति॥

यत्तु 'शक्तितः प्रवृत्तेश्च' इति, तत्राह—

**प्रवृत्तेश्च॥ २॥**

लोके हि अचेतनरथादिप्रवृत्तेः चेतनाधीनत्वदर्शनात्, प्रधानस्य साम्यावस्थाप्रच्युतिरूपप्रवृत्तेश्चेतनप्रेरणमन्तरेण अनु-पपत्तेरित्यर्थः॥

अन्यत्र व्यभिचारमाशङ्क्य परिहरति—

**पयोम्बुवच्चेत्तत्रापि॥ ३॥**

ननु अचेतनस्य स्वयं प्रवृत्तिर्दृश्यते । यथा क्षीरं वत्सविवृद्धये स्वयमेव प्रवर्तते, यथा वा जलं स्वयमेव स्यन्दते, तद्वत् प्रधानमपि स्वयमेव प्रवर्तेत इति चेत्, तत्रापि परमात्मैव प्रेरकः श्रूयते 'योऽप्सु तिष्ठन्' इत्यादिना । तथा च पयोम्बुनोः पक्षत्वान्न व्यभिचार इति भावः ॥

ननु एवमपि धर्माद्यपेक्षया प्रधानस्य प्रवृत्तिः स्यादित्याशङ्क्याह—

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात्** ॥ ४ ॥

सांख्यमते गुणाः साम्येनावस्थिताः प्रधानम्, तद्व्यतिरेकेण सहकार्यन्तरस्यानवस्थितेः ; पुरुषस्य तु असङ्गोदासीनत्वेन प्रवृत्तौ निवृत्तौ वा अनपेक्षत्वाभ्युपगमादित्यर्थः ॥

ननु सहकार्यभावेऽपि प्रवृत्तिरन्यत्र दृष्टेत्यत आह—

**अन्यत्राभावाच्च न तृणादिवत्** ॥ ५ ॥

तृणादिकं निमित्तान्तरनिरपेक्षमेव क्षीराकारेण परिणमते, तद्वत् प्रधानमपीति चेत्, न । कुतः, अन्यत्राभावात् धेन्वादेरन्यत्र बलीवर्दादौ तृणादेः क्षीरभावस्याभावादित्यर्थः । धेन्वादिसापेक्षमेव तृणादिकं क्षीरं भवति । निरपेक्षत्वे बलीवर्दादावपि क्षीरभावप्रसङ्गादिति भावः ॥

प्रधानस्य स्वतः प्रवृत्तिमुपेत्यापि दूषयति—

**अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥**

प्रधानस्य स्वतःप्रवृत्त्यभ्युपगमेऽपि पुरुषार्थस्यापेक्षाभावप्रसङ्गादित्यर्थः। न चेष्टापत्तिः; प्रधानमचेतनं चेतनस्य पुरुषार्थं साधयितुमेव प्रवर्तत इति स्वाभ्युपगमविरोधादिति भावः ॥

ननु पुरुष एव स्वयमप्रवर्त्तमानोऽपि प्रधानप्रवर्तकः स्यादित्याशङ्क्याह——

**पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥**

लोके यथा पङ्गुः पुरुषः स्वयमप्रवर्तमानोऽपि अन्यमन्धं प्रवृत्तिशक्तिमन्तं प्रवर्तयति, यथा वा अयस्कान्तोऽश्मा संनिधिमात्रेणायः प्रवर्तयति, एवं पुरुषः प्रवर्तक इति चेत्, तथापि प्रधानस्य पुरुषप्रेर्यत्वे स्वातन्त्र्याभ्युपगमविरोधः, पुरुषस्य प्रवर्तकत्वे कौटस्थ्यहानिरित्यादिदोषाणामनिर्मोक्षः। ब्रह्मणस्त्वाविद्यकं प्रवर्तकत्वमिति न कौटस्थ्यहानिः ॥

अपि च——

**अङ्गित्वानुपपत्तेश्च ॥ ८ ॥**

सांख्यमते गुणत्रयसाम्यावस्था प्रकृतिः; सा कूटस्था वा, विकारिणी वा। आद्ये परस्परानपेक्षाणां गुणानां साम्यावस्था-

प्रच्युत्यभावेन अङ्गाङ्गित्वानुपपत्तेः कार्यानुदयप्रसङ्गः । द्वितीये स्वतः प्रच्युतिः, उतान्यतः; नाद्यः, सदा कार्यप्रसङ्गात्; न द्वितीयः, पुरुषस्यौदासीन्याभ्युपगमहानेः । अतः प्रच्युत्यभावेन अङ्गाङ्गिभावानुपपत्तेः कार्याभावप्रसङ्ग इत्यर्थः ॥

गुणानामनपेक्षस्वभावत्वात् न प्रच्युतिरित्यत्रासिद्धिमाशङ्क्य परिहरति—

**अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥**

न वयमनपेक्षस्वभावान्कूटस्थान्गुणाननुमिमीमहे; अपि तु अन्यथा प्रकारान्तरेण गुणानन्योन्यसापेक्षान्; एवमनुमितौ न प्रागुक्तदोषप्रसक्तिरिति चेत्, न; ज्ञशक्तिवियोगात् गुणानां ज्ञानशक्तिरहितत्वादित्यर्थः । स्वतःप्रच्युत्यभावेन अङ्गाङ्गिभावानुपपत्तेः कार्यानुदयप्रसङ्गस्तदवस्थ एवेति भावः ॥

इतश्चासंगतं सांख्यमतमित्याह—

**विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥**

सांख्या हि क्वचिन्महतः पञ्चतन्मात्रसर्गं संगिरन्ते, क्वचिदहंकारात्, क्वचिदेकादशेन्द्रियाणि, क्वचिद्बाह्येन्द्रियाणि त्वगिन्द्रियेऽन्तर्भाव्य सप्तेन्द्रियाणीति । एवं च परस्परविप्रतिषेधादसमञ्जसं सांख्यमतम् । तस्मात् सांख्यसिद्धान्तो

भ्रान्तिमूल एवेति सिद्धम् ॥

पूर्वं प्रपञ्चस्य प्रधाननिष्ठाशब्दत्वादिगुणानन्वयात् प्रधानानुपादानकत्ववत् ब्रह्मगुणचेतनत्वानन्वयात् ब्रह्मोपादानकत्वं न स्यादिति दृष्टान्तसंगत्येदमाह—

**महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥**

स्वपक्षदोषनिरासस्य स्मृतिपादसंबन्धेऽपि उक्तावान्तरसंगतिलाभादिहेदमधिकरणं लिखितमिति बोद्धव्यम् । फलं पूर्ववत् । चेतनाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयोऽत्र विषयः । स किं कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका इति न्यायेन विरुध्यते, न वेति संदेहे, विरुध्यत इति पूर्वः पक्षः । सिद्धान्तस्तु—ह्रस्वपरिमण्डलाभ्यां द्व्यणुकपरमाणुभ्याम्, महद्दीर्घवत् । चशब्दार्थकवाशब्दात् ह्रस्वाणुवच्च, चेतनात् ब्रह्मणोऽचेतनं जगद्भवतीति योजना । एतदुक्तं भवति— वैशेषिका हि ह्रस्वाणोर्द्व्यणुकान्महद्दीर्घं च त्र्यणुकं जायते; द्व्यणुकनिष्ठह्रस्वत्वाणुत्वे त्र्यणुके स्वसमानजातीयह्रस्वत्वाणुत्वे नारभेते; किं तु द्व्यणुकगतत्रित्वसंख्या त्र्यणुके महत्त्वादिकमारभते । एवं परिमण्डलात् परमाणोः अणु द्व्यणुकं जायते; परमाणुगतं पारिमाण्डल्यं परिमाणं द्व्यणुके तादृशं पारिमाण्डल्यं नार-

२. महद्दीर्घाधिकरणम् ।

भते ; किं तु परमाणुगतद्वित्वसंख्या द्व्यणुके ह्रस्वत्वादिकमारभते—इति प्रक्रियां प्रदर्शयन्ति । इत्थं प्रदर्शयतां वैशेषिकाणां कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भका इति न्यायाभासं वदतां कथं न लज्जा भवेत्, व्यभिचारस्य स्फुटत्वात् । अतः समन्वयो न विरुध्यत इति सिद्धम् । 'एतेन शिष्टापरिग्रहाः....' इत्यस्यायं प्रपञ्च इत्यपौनरुक्त्यम् ॥

प्रासङ्गिकाव्यवहितेनास्य न संगत्यपेक्षा । व्यवहितेन तु—पूर्वं प्रधानस्य चेतनानधिष्ठितत्वात्कारणत्वाभावे उक्ते ; तर्हि चेतनाधिष्ठिताः परमाणवः कारणं जगत इति प्रत्युदाहरणसंगत्येदमाह—

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

अत्र पूर्वपक्षे वैशेषिकसिद्धान्तविरोधे समन्वयासिद्धिः, सिद्धान्ते तदविरोधे तत्सिद्धिरिति फलभेदः । परमाणुप्रक्रियया जगदुत्पत्तिरिति वैशेषिकराद्धान्तोऽत्र विषयः । स किं प्रमाणमूलः, भ्रान्तिमूलो वेति संदेहे, प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु— वैशेषिकाः खलु कर्मणा प्राक्सृष्टेर्निश्चलयोः परमाण्वोः संयोगे द्व्यणुकाद्युत्पत्तिरित्याचक्षते । तस्य कर्मणः किंचिन्निमित्तमभ्युपगम्यते वा, न वा । आद्ये, कर्म-

३ परमाणुजगदकारणत्वाधिकरणम् ।

निमित्तत्वेन प्रसिद्धं जीवप्रयत्नाभिघातादिकमङ्गीकर्तव्यम् । न हि तत्संभवति, सृष्ट्युत्तरकालीनत्वात् तस्य । द्वितीये कर्मानुत्पत्तिः । अत उभयथापि न कर्म, अदृष्टस्याचेतनस्य स्वतः कर्माभिमुख्यायोगात् । अतः कर्माभावात्, तदभावः द्व्यणुकादिक्रमेण सृष्ट्युत्पादस्याभाव इति दिक् । तस्माद्वैशेषिकसिद्धान्तो भ्रान्तिमूल इति सिद्धम् ॥

किं च—

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥**

तदभाव इत्यनुषङ्गः । तस्य द्व्यणुकादिसृष्ट्युत्पादस्याभावः । कुतः, परमाणुद्व्यणुकानां समवायाभ्युपगमात् । अस्त्वभ्युपगमः, किं तेन— साम्यादनवस्थितेः । यथैव हि अणुभ्यामत्यन्तभिन्नं सत् द्व्यणुकं समवायेन ताभ्यां संबध्यते, एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन् अन्येन समवायेन समवायिभिः संबध्येत, अत्यन्तभेदसाम्यात् ; ततश्च तस्यान्योन्यः समवायः कल्पनीय इत्यनवस्थानात् । एवं च समवायासिद्धौ समवेतद्व्यणुकादिसृष्ट्यसिद्धिः स्यादित्यर्थः ॥

अपि च—

**नित्यमेव च भावात् ॥ १४ ॥**

परमाणूनां प्रवृत्तिस्वभावत्वे प्रवृत्तेः नित्यमेव भावात् प्रलयाभावप्रसङ्गः । निवृत्तिस्वभावत्वे निवृत्तेः नित्यमेव सत्त्वात् सृष्ट्यभावप्रसङ्ग इत्यर्थः ॥

इत्थं परमाणूनां कारणत्वं निराकृत्य निरवयवत्वादिकं निराकर्तुमाह—

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥**

वैशेषिकमते जगत्कारणपरमाणूनां रूपादिमत्त्वात् निरवयवत्वाणुत्वनित्यत्वविपर्ययः सावयवत्वादिः प्रसज्येत, लोके रूपादिमतः पटादेस्तथा दर्शनादित्यर्थः ॥

किं च—

**उभयथा च दोषात् ॥ १६ ॥**

वैशेषिकमते परमाणवः किमुपचितानुपचितगुणात्मकाः कल्प्यन्ते, न वा । आद्ये, अणुत्वव्याघातः, उपचितानुपचितगुणात्मकपृथिव्यादेः स्वरूपोपचयदर्शनात् । द्वितीये, तत्कार्यपृथिव्यादिषु रूपाद्यनुपलम्भप्रसङ्ग इति उभयथापि दोषादनुपपन्नः परमाणुकारणवादः ॥

अपि च—

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥**

परमाणुकारणवादस्य केनाचिदप्यंशेन कैश्चिदपि शिष्टैः अपरिग्रहात् तत्रात्यन्तमनपेक्षा श्रेयोर्थिभिः कर्तव्या । अतो वैशेषिकराद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥

एवमर्धवैनाशिकवैशेषिकमतनिराकरणानन्तरं पूर्णवैनाशिकमतं बुद्धिस्थमिदानीं निराक्रियत इत्यवान्तरसंगत्येदमाह—

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥**

४. समुदायाधिकरणम् ।

फलं पूर्ववत् । चत्वारः खलु बुद्धमुनेर्विनेया वैभाषिकसौत्रान्तिकविज्ञानवादिसर्वशून्यवाद्याख्याः । तत्रादौ वैभाषिकसौत्रान्तिकयोः बाह्यास्तित्वाविशेषात् तन्मतमेकीकृत्य तत्किं प्रमाणमूलं भ्रान्तिमूलं वेति संदेहे, पृथिव्यादीनि चत्वारि भूतानि भौतिकानि विषयेन्द्रियाणि च परमाणुपुञ्जस्वरूपाणि ; तत्र बाह्यः पृथिव्यादिसमुदायः परमाणुहेतुक एव ; आध्यात्मिको रूपादिसमुदायो रूपविज्ञानवेदनासंज्ञासंस्कारलक्षणपञ्चस्कन्धहेतुकः— इति तन्मतं प्रामाणिकमिति पूर्वः पक्षः । सिद्धान्तस्तु— उभयहेतुकेऽपि समुदाये परमाणुहेतुके बाह्यसमुदाये स्कन्धहेतुके आध्यात्मिकसमुदाये च, तदप्राप्तिः तस्य समुदायस्याप्राप्तिः ; अचेतनानां परमाणूनां स्कन्धानां च स्वतःसमुदायायोगात्, अन्यस्य च स्थिरस्य चेतनस्य

समुदायकर्तुरनभ्युपगमात् । अतः तन्मतं भ्रान्तिमूलमिति सिद्धम् ॥

ननु संहन्तुश्चेतनस्याभावेऽपि संघात उपपद्यत इत्याशङ्क्य परिहरति—

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥**

अविद्या संस्कारो विज्ञानमित्येवंजातीयकानामविद्यादीनाम् इतरेतरप्रत्ययत्वात् इतरेतरकारणत्वात् घटीयन्त्रवदनिशमावर्तमानेषु अविद्यादिषु अर्थादाक्षिप्तः संघात उपपद्यत इति चेत्, न; उत्पत्तिमात्रनिमित्तत्वात् अविद्यादीनामितरेतरकारणत्वेऽपि उत्पत्तिमात्रे निमित्तत्वात् तवाभिमतो हेत्वधीनः कारणसमुदायाधीनश्च कार्योत्पादो न संभवति, संहन्तुः स्थिरस्य चेतनस्यानङ्गीकारादित्यर्थः ॥

सर्वक्षणिकत्ववादिनां हेत्वधीनोऽपि कार्योत्पादो न संभवतीत्याह—

**उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥**

कार्यकाले विद्यमानस्यैव मृदादेः कारणत्वं दृश्यते । न तु नष्टस्य । भवन्मते तु उत्तरस्य कार्यक्षणस्य उत्पादे पूर्वस्य

कारणक्षणस्य निरोधात् विनाशाङ्गीकारादित्यर्थः ॥

ननु निर्हेतुक एव कार्योत्पादोऽस्तु; तथा च नोक्तदोष इत्याशङ्क्याह—

**असति प्रतिज्ञोपरोधो यौगपद्य-मन्यथा ॥ २१ ॥**

असति हेतौ कार्योत्पत्त्यङ्गीकारे पूर्वं ज्ञानचक्षुरालोकविषयेषु चतुर्षु हेतुषु सत्सु कार्यं नीलादिविज्ञानं जायते इत्यस्याः प्रतिज्ञाया उपरोधः स्यात्। अन्यथा कार्यं सहेतुकमित्यङ्गीकृत्य कार्यपर्यन्तं हेतोः स्थित्यङ्गीकारे, हेतुफलयोः यौगपद्यम् एकस्मिन्काले स्थितिः स्यादित्यर्थः। एवं च क्षणिकत्वप्रतिज्ञाहानिरिति भावः ॥

इत्थं समुदायः कार्यकारणत्वं क्षणिकत्वं च असिद्धमित्यभिधाय अधुनाभ्युपगमान्तरं प्रत्याह—

**प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्ति-रविच्छेदात् ॥ २२ ॥**

वैनाशिकाः खलु भावानां बुद्धिपूर्वकनाशोऽबुद्धिपूर्वकनाश आकाशश्चेति त्रितयमपि अवस्तु निरुपाख्यमित्याचक्षते। तत्र आकाशं परस्तात् प्रत्याख्यास्यति; नाशद्वयमधुना प्रत्याचष्टे।

प्रतिसंख्याप्रतिसंख्यानिरोधौ बुद्धिपूर्वकाबुद्धिपूर्वकनाशौ तयोः संतानसंतानिषु अप्राप्तिः असंभवः । कुतः, अविच्छेदात् न तावन्निरोधद्वयस्य संतानगोचरत्वम्, संतानस्याविच्छेदात् । नापि संतानिप्रतियोगिकत्वम्, संतानिनां घटादीनां क्षणिकत्वेन बुद्धिपूर्वकनाशायोगात् । नाप्यबुद्धिपूर्वकसमूलनाशस्त्वदभ्युपगतः संभवति, मूलस्य मृदादेः प्रत्यभिज्ञायमानत्वात् । तस्मान्निरोधद्वयस्यानुपपत्तिरित्यर्थः ॥

प्रतिसंख्यानिरोधान्तर्भूतमविद्यानिरोधं निरस्यति—

**उभयथा च दोषात् ॥ २३ ॥**

क्षणिकेषु स्थिरत्वादिभ्रान्तिः अविद्या । तस्याः किं सम्यग्ज्ञानान्नाशः, स्वतो वा । नाद्यः, निर्हेतुकनाशाभ्युपगमहानिप्रसङ्गात्; न द्वितीयः, सम्यग्ज्ञानोपदेशानर्थक्यादिति उभयथापि दोषादसंगतं सौगतमतमित्यर्थः ॥

इत्थं निरोधद्वयस्य निरुपाख्यत्वं निरस्य, आकाशस्य तन्निरस्यति—

**आकाशे चाविशेषात् ॥ २४ ॥**

'आत्मन आकाशः संभूतः' इति श्रुत्या शब्दगुणत्वेन चाकाशेऽपि पृथिव्यादिवद्वस्तुत्वप्रतिपत्तेरविशेषात् न निरुपाख्यत्वमित्यर्थः ॥

अधुना आत्मनः क्षणिकत्वं निराचष्टे—

**अनुस्मृतेश्च ॥ २५ ॥**

अनुभवमनु उत्पद्यमाना स्मृतिः अनुस्मृतिः, तद्बलात् आत्मनोऽनुभवितुः न क्षणिकत्वमित्यर्थः । अन्यस्यानुभूते विषये अन्यस्य स्मरणायोगादिति भावः ॥

कारणाभावात्कार्योत्पत्तिरिति पक्षमवशिष्टं निराचष्टे—

**नासतोऽदृष्टत्वात् ॥ २६ ॥**

असतोऽभावात्कार्योत्पत्तिर्न युक्ता । कुतः, अदृष्टत्वात् निरुपाख्यात् नरविषाणादेः कार्योत्पत्तेरदृष्टत्वात् । दृष्टत्वादिति वा छेदः । सत एव मृदादेर्दृष्टत्वादित्यर्थः ॥

अधुना प्रवृत्तिमात्रमपि न युक्तमित्याह—

**उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥**

अभावाद्भावोत्पत्तिरित्यङ्गीकारे उदासीनानां तत्तत्कार्यसाधनेषु अप्रवर्तमानानामपि पुंसां स्वस्वाभिमतकार्यसिद्धिः स्यात् । अतो वैभाषिकसौत्रान्तिकयोर्मतं भ्रान्तिमूलमेवेति सिद्धम् ॥

पूर्वं क्षणिकबाह्यार्थवादिमतनिराकरणमकारि । तदुपजीव्यं क्षणिकविज्ञानमात्रवादी प्रत्यवतिष्ठत इति उपजीव्योपजी-

त्वकभावसंगत्येदमाह—

## नाभाव उपलब्धेः ॥ २८ ॥

फलं पूर्ववत् । विज्ञानातिरिक्तबाह्यपदार्थस्याभाव इति विज्ञानवादिसिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलः, भ्रान्तिमूलो वेति संदेहे, प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु— विज्ञानव्यतिरिक्तानामभावो न संभवति । कुतः, उपलब्धेः विज्ञानातिरिक्तानामर्थानां घटः पटः इत्याद्यनुभवसिद्धत्वादित्यर्थः ॥

१. अभावाधिकरणम् ।

ननु जाग्रद्दशायामुत्पन्नाः सर्वे प्रत्यया निरालम्बनाः, प्रत्ययत्वात् स्वप्नगन्धर्वनगरादिप्रत्ययवत्; इत्याशङ्क्य बाधितविषयत्वमुपाधिरित्याह—

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

स्वप्नादिप्रत्ययस्य जाग्रत्प्रत्ययस्य च अन्योन्यं बाधितविषयत्वाबाधितविषयत्वरूपवैधर्म्यात् न स्वप्नादिदृष्टान्तेन निरालम्बनत्वं जाग्रत्प्रत्ययस्येत्यर्थः । चशब्देन दृष्टान्ते साध्यवैकल्यं सूचितं स्वप्ने प्रातिभासिकविषयाणां सत्त्वादिति । बाह्यार्थानामभावे घटज्ञानं पटज्ञानमिति ज्ञानवैचित्र्यं न स्यादिति सूत्रद्वयस्य तात्पर्यम् ॥

ननु अर्थानामभावेऽपि वासनाभिस्तद्वैचित्र्यं स्यादित्यत आह—

**न भावोऽनुपलब्धेः ॥ ३० ॥**

वासनानां न भावो न सद्भावः। कस्मात्, अनुपलब्धेः त्वत्पक्षे बाह्यार्थानामनुपलब्धेरित्यर्थः। बाह्यार्थानुभवस्य च वासनां प्रति कारणत्वात् कारणाभावे कार्याभावः। किं च त्वत्पक्षे वासनानां संस्काराभिधानानामाश्रयासंभवादनुपपत्तिरिति भावः ॥

ननु अहमित्यालयप्रत्यय एवाश्रय इत्यत आह—

**क्षणिकत्वाच्च ॥ ३१ ॥**

आलयविज्ञानस्य क्षणिकत्वाङ्गीकारान्नाश्रयत्वमित्यर्थः ॥

अधिकरणद्वयार्थमुपसंहरति—

**सर्वथानुपपत्तेश्च ॥ ३२ ॥**

पश्यनातिष्ठनेत्याद्यपशब्दप्रयोगात् ग्रन्थतोऽनुपपन्नमिदं मतम्; उक्तक्रमेणार्थतोऽनुपपन्नमेवेति सर्वथानुपपत्तेः नादरणीयं श्रेयोर्थिभिः भ्रान्तिमूलं सौगतमतमिति सिद्धम्। सर्वशून्यवादिनिरासपरत्वेनापि एतानि 'नाभाव उपलब्धेः' इत्यादिसूत्राणि योजयितव्यानि ॥

एवं मुक्तकच्छानां बौद्धानां मते निरस्ते, मुक्ताम्बराणां मतं बुद्धिस्थम् । एवं च बुद्धिसंनिधिलक्षणसंगत्येदमाह—

**नैकस्मिन्नसंभवात् ॥ ३३ ॥**

फलं पूर्ववत् । दिगम्बरमतं प्रमाणमूलं भ्रान्तिमूलं वेति संदेहे, स्यादस्ति स्यान्नास्ति इत्यादिसप्तभङ्गीनयम् अस्तित्वनास्तित्वादिविरुद्धधर्मद्वयमादाय सर्वेषु पदार्थेषु योजयन्तो दिगम्बराः पदार्थमात्रस्यानेकरूपत्वमाचक्षत इति तन्मतं प्रमाणमूलमिति पूर्वः पक्षः । सिद्धान्तस्तु— नैकस्मिन्नसंभवात् एकस्मिन् परमात्मरूपे वस्तुनि विरुद्धधर्माणामसंभवात्, वस्तुनोऽनेकरूपत्वं नास्तीत्यर्थः । यदस्ति तदस्त्येव न नास्ति, यन्नित्यं तन्नित्यमेव नानित्यम्, यथा प्रत्यगात्मा वस्तुभूतः । एवं प्रपञ्चस्यापि त्वन्मते वस्तुभूतत्वान्नानेकरूपत्वसंभवः । अस्मन्मते तु प्रपञ्चो न सन् नासन्; किंतु अनिर्वचनीय एवेति सर्वव्यवहारसंभव इति भावः ॥

६. एकस्मिन्नसंभवाधिकरणम् ।

दिगम्बराणां देहपरिमाण एवात्मेति यन्मतम्, तद्दूषयति—

**एवं चात्माकार्त्स्न्यम् ॥ ३४ ॥**

यथैकत्र विरुद्धधर्मासंभवो दोषः स्याद्वादे प्रसक्तः, एवमा-

त्मनो जीवस्य अकार्त्स्न्यें परिच्छिन्नत्वमपरो दोषः स्यादित्यर्थः । तथा च परिच्छिन्नत्वादात्मनो घटादिवत् अनित्यत्वं स्यात् । देहपरिमाणत्वे मनुष्यात्मनः कर्मवशात् गजशरीरे कृत्स्ने, कृत्स्नस्यात्मनः पुत्तिकाशरीरे वा प्रवेशो न स्यादिति भावः ॥

ननु आत्मनः सावयवत्वाङ्गीकारात्क्रमेण प्रवेशोऽस्त्वित्याशङ्क्याह—

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

पर्यायेणाप्यवयवगमनागमनाभ्यां तत्तत्स्थूलसूक्ष्मशरीरपरिमाणत्वस्य आत्मन्यविरोध इति, न च । कुतः, विकारादिभ्यः आत्मनः सावयवत्वेन तत्तच्छरीरप्राप्त्या वृद्धिह्रासवत्त्वाङ्गीकारे विकारित्वप्रसक्त्या अनित्यत्वे बन्धमोक्षाभ्युपगमो बाध्येतेत्यर्थः ॥

किं च—

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥**

अन्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वेनावस्थितेः तत्पूर्वयोरुभयोरपि आद्यमध्यमपरिमाणयोः नित्यत्व-

प्रसङ्गात् त्रयाणामाद्यमध्यमान्त्यपरिमाणानामविशेषः साम्यं स्यात् । अतः सौगतमतवदार्हतमतमपि अप्रामाणिकमिति सिद्धम् ॥

पूर्वं सत्त्वासत्त्वयोरेकत्र विरोधादसंभव इत्युक्तम् । तर्हि तद्वदुपादानत्वकर्तृत्वयोरेकत्र विरोधादसंभव इति दृष्टान्तसंगत्येदमाह—

**पत्युरसामञ्जस्यात् ॥ ३७ ॥**

फलं पूर्ववत् । केवलमधिष्ठाता ईश्वरो जगतो नोपादानमिति माहेश्वरराद्धान्तोऽत्र विषयः । स किं प्रमाणमूलः, भ्रान्तिमूलो वेति संदेहे, प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु— पत्युरीश्वरस्य जगदुपादानप्रधानादिप्रेरकत्वेन जगन्निमित्तमात्रत्वं न संभवति । कुतः, असामञ्जस्यात् ईश्वरस्य जगत्सर्जने प्रवृत्तौ रागादिदोषप्रसङ्गात् असामञ्जस्यं स्यात्, प्रवृत्तेः रागादिपूर्वकत्वेन लोके दृष्टत्वात्, दृष्टानुसारित्वात् कल्पनायाः । अस्माकं तु श्रुत्यनुसारित्वादनिर्वचनीयवादित्वाच्च न दोष इति भावः ॥

७. पत्यधिकरणम् ।

अपि च—

**संबन्धानुपपत्तेश्च ॥ ३८ ॥**

प्रेर्यप्रधानादिभिः प्रेरकस्येश्वरस्य संबन्धो वाच्यः, असं-

बद्धस्य प्रेरकत्वायोगात् । न च संबन्धः संभवति, निरवयवत्वात् युतसिद्धत्वाच्च संयोगसमवाययोरनुपपत्तेरित्यर्थः । सिद्धान्ते तु आविद्याप्रेरकत्वं कल्पिततादात्म्येनोपपद्यत इति भावः ॥

किं च—

**अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥**

लोके कुलालस्य मृदादिप्रेरकत्वं दृष्टम्, न हीश्वरस्य प्रधानादिप्रेरकत्वं संभवति; प्रधानस्य रूपादिहीनत्वेन तद्विषयकाधिष्ठानस्य प्रेरणाया अनुपपत्तेरित्यर्थः । सिद्धान्ते तु न दृष्टापेक्षा, श्रुत्येकशरणत्वादिति भावः ॥

एतद्विधान्तरेणाक्षिप्य परिहरति—

**करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥**

करणानीन्द्रियाणि अप्रत्यक्षाण्यपि यथा जीवेन प्रेर्यन्ते, एवं प्रधानमप्रत्यक्षमपि ईश्वरेण प्रेर्यत इति चेन्, न । कुतः, भोगादिभ्यः दोषेभ्यः जीवस्य भोगार्थमिन्द्रियप्रेरकत्ववदीश्वरस्य प्रेरकत्वे तद्भोगादयः प्रसज्येरन्नित्यर्थः ॥

किं च—

**अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥**

प्रधानजीवेश्वराणां या संख्या यच्च परिमाणं तदुभयमपि ईश्वरेण परिच्छिद्यते न वेति संदेहे, आद्ये परिच्छिन्नसंख्या-परिमाणवत्त्वात् त्रयाणां घटवदन्तवत्त्वं विनाशित्वं स्यात्; द्वितीये ईश्वरस्यासर्वज्ञत्वं स्यात्। अतो माहेश्वरराद्धान्तो भ्रान्तिमूल एवेति सिद्धम् ॥

एवं केवलाधिष्ठातैवेश्वर इति वेदासंगतमते निरस्ते । निमित्तं प्रकृतिश्चेश्वर इति भागवतमतस्य वेदसंगतत्वात् जीवोत्पत्त्यंशे प्रमाणमूलत्वं स्यादिति प्रत्युदाहरणसंगत्येदमाह——

**उत्पत्त्यसंभवात् ॥ ४२ ॥**

८. उत्पत्त्यसंभवाधिकरणम् ।

फलं पूर्ववत् । वासुदेवः खलु परमात्मा जगदुपादानं निमित्तं च । तस्मात् संकर्षणाख्यो जीव उदेति; तस्मात् प्रद्युम्नाख्यं मनो जायते; तस्मात् अनिरुद्धाख्योऽहंकारो जायत इति भागवतराद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो भ्रान्तिमूलो वेति संदेहे, प्रमाणमूल इति पूर्वः पक्षः । सिद्धान्तस्तु—— भवतु वेदाविरुद्धांशे प्रमाणमूलत्वम् , न तत् वेदविरुद्धजीवोत्पत्त्यंशे । कुतः, वासुदेवात् जीवस्योत्पत्तेरसंभवात्। यद्युत्पत्तिरङ्गीक्रियते, तर्हि घटवदनित्यत्वापत्त्या भगवत्प्राप्तिरूपमोक्षस्त्वदभ्युपगतः कस्य स्यात् । अतो भ्रान्तिमूलो भागवतसिद्धान्तः ॥

इत्थं जीवजन्म निरस्य ततो मनोजन्म निरस्यति—

**न च कर्तुः करणम् ॥ ४३ ॥**

कर्तुः देवदत्तादेः सकाशात् करणस्य कुठारादेः उत्पत्त्यदर्शनात् जीवात्कर्तुः करणं मनो जन्यत इत्येतदसंगतमित्यर्थः ॥

ननु वासुदेवात् न संकर्षणस्य जन्म, नापि संकर्षणात् प्रद्युम्नस्येत्यत्रेष्टापत्तिमाशङ्क्याह—

**विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥**

संकर्षणादीनां त्रयाणां वासुदेववद्विज्ञानादिभावे वा विज्ञानैश्वर्यबलवन्निर्दोषनिरवद्यस्वरूपत्वेऽपि तदप्रतिषेधः तस्योत्पत्त्यसंभवरूपदोषस्य प्रकारान्तरेण अप्रतिषेध इत्यर्थः । किं वासुदेवादयश्चत्वारोऽपीश्वराः, उत संकर्षणादयस्त्रयो वासुदेवतुल्याः । आद्ये भगवानेक एव वासुदेव इति स्वसिद्धान्तहानिः, द्वितीये उत्पत्त्यसंभवदोषस्तदवस्थ एवेति भावः ॥

अपि च—

**विप्रतिषेधाच्च ॥ ४५ ॥**

क्वचित् ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि वासुदेवस्य गुणा इति, क्वचिच्च उक्तगुणा एव वासुदेव इति गुणगुणिनोर्भेदमभेदं च वर्णयन्ति । तथा च परस्परं विप्रतिषेधात् अप्रामा-

णिकमिदं भागवतमतमित्यर्थः। तस्मादेवं सांख्यवैशेषिकसौगतार्हतमाहेश्वरभागवतमतानां भ्रान्तिमूलत्वेन तैर्मतैः निरवद्यादद्वैतात् ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो न विरुध्यत इति सिद्धम् ॥

यत्साक्षात्कृतये सर्ववेदान्तानां समन्वये।
परास्तः परराद्धान्तविरोधस्तदहं परम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां द्वितीयाध्यायस्य
द्वितीयः पादः ॥



ॐ

# तृतीयः पादः ॥

पूर्वस्मिन्पादे श्रुतिविरुद्धत्वात् परपक्षाणामनपेक्षत्वमभाणि। तर्हि श्रुतीनामप्यन्योन्यविरुद्धत्वात् ब्रह्मकारणवादस्यापि अनपेक्षत्वं स्यादिति शङ्कानिरासार्थं परं पादद्वयमारभ्यते। एवं च पूर्वपादेनास्य पादद्वयस्य दृष्टान्तसंगतिः शङ्काव्याजेन दर्शिता। पादान्तरत्वात् पूर्वाधिकरणेनास्याधिकरणस्य न संगत्यपेक्षा—

## न वियदश्रुतेः ॥ १ ॥

अत्र पूर्वपक्षे श्रुतीनां मिथोविरोधादप्रामाण्यम्, सिद्धान्ते विरोधाभावात्प्रामाण्यमिति फलभेदः। एवं सर्वेषु चाधिकरणेषु पादद्वयगतेषु पूर्वोत्तरपक्षयोः फलं द्रष्टव्यम्।

१. वियदधिकरणम्।

अत्रादौ सृष्टिवाक्यानामविरोधं प्रतिपादयितुमाकाशमाश्रित्य विचार्यते। किमाकाशस्योत्पत्तिरस्ति, उत नेति संदेहे, यद्यस्ति तर्हि छान्दोग्ये आकाशवायू विना 'तत्तेजोऽसृजत' इति तेजआदिका सृष्टिः श्रूयते; तैत्तिरीयके

तु— 'आत्मन आकाशः संभूतः' इति आकाशादिका। तथा चानयोर्वाक्ययोर्विरोध इति पूर्वः पक्षः। सिद्धान्तस्तु— एकदेशिमतेन न वियत् आकाशः उत्पद्यते। कस्मात्, अश्रुतेः आकाशस्योत्पत्तिप्रतिपादकवाक्यस्याश्रवणात्। यद्यपि 'आत्मन आकाशः संभूतः' इति श्रुतिरस्ति, तथापि सा गौणीति गूढाभिसंधिः॥

ततश्च आकाशस्योत्पत्तेरनभ्युपगमादेव न विरोध इति ग्रन्थाभिसंधिमजानानः शङ्कते—

## अस्ति तु॥ २॥

तुशब्दः पक्षान्तरपरिग्रहे। छान्दोग्ये आकाशस्योत्पत्त्यभावेऽपि सा श्रुतिः तैत्तिरीयकेऽस्तीत्यर्थः। तथा च विरोधस्तदवस्थ एवेति शङ्कितुराशयः॥

एकदेशी स्वाभिप्रायं प्रकटयति—

## गौण्यसंभवात्॥ ३॥

न ह्याकाशस्योत्पत्तिश्रुतिर्मुख्या, किं तु गौणी। कुतः, असंभवात् आकाशोत्पत्तौ समवायिकारणादिसामग्र्यभावात्, विभुत्वेन नित्यत्वानुमानाच्च आकाशोत्पत्तेरसंभवादित्यर्थः॥

किं च—

## शब्दाच्च ॥ ४ ॥

'वायुश्चान्तरिक्षं चैतदमृतम्' इत्याकाशे अमृतशब्ददर्शनात् नाकाशस्योत्पत्तिरित्यर्थः ॥

ननु एकस्मिन्वाक्ये एकस्य संभूतशब्दस्य गौणत्वं मुख्यत्वं च विरुध्यत इत्यत आह—

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

यथा एकस्मिन्नेव प्रकरणे विषयभेदात् 'अन्नं ब्रह्म' इत्यत्र ब्रह्मशब्दो गौणः 'आनन्दो ब्रह्म' इत्यत्र मुख्यः, तथा प्रकृतेऽपि विषयभेदादेकस्य गौणत्वं मुख्यत्वं च स्यादित्यर्थः ॥

इदमेकदेशिमतं दूषयन् सिद्धान्तयति—

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

औपनिषदात् ब्रह्मणः सर्वस्य वस्तुजातस्य अव्यतिरेकात् एकविज्ञानात् सर्वविज्ञानप्रतिज्ञाया अहानिर्भवति। यद्याकाशस्योत्पत्तिर्न स्यात्, तर्हि सा प्रतिज्ञा हीयेत । अतस्तत्सिद्धये आकाशस्योत्पत्तिरङ्गीकर्तव्या । किं च शब्देभ्यः 'सदेव सोम्येदमग्र आसीत्' 'ऐतदात्म्यमिदं सर्वम्' इत्यादिशब्देभ्यः कार्यकारणाभेदपरेभ्यः प्रतिज्ञासिद्धिरवगम्यते । न चैवमप्या-

काशस्योत्पत्तौ पूर्वोक्तविरोधस्तदवस्थ एवेति वाच्यम् । छान्दोग्यश्रुतिः तैत्तिरीयकश्रुत्यनुसारेण आकाशं वायुं च सृष्ट्वा 'तत्तेजोऽसृजत' इति विपरिणम्यत इति नानयोर्विरोधः । यत्तु सामग्र्यभावादिति, तन्न ; श्रौतस्य ब्रह्मण एव वियत्सामग्रीत्वात् ॥

यच्च नित्यत्वानुमानाच्चेति, तच्चानुमानेनैव दूषयति—

**यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥**

तुशब्द आकाशोत्पत्त्यसंभवशङ्काव्यावृत्त्यर्थः । यतः यावद्विकारजातं विभागो दृश्यते, न त्वविकारे ब्रह्मणि ; लोके घटादेर्विकारस्यैव विभक्तत्वदर्शनात् । यथा चायं प्रयोगः—आकाशादिः पराधीनसत्ताकः, स्वसमानसत्ताकविभागवत्त्वात् घटादिवत्— इति । तथा च परोक्ताविभक्तत्वहेतोरसिद्धिर्द्रष्टव्या । अमृतशब्दप्रयोगस्तु आपेक्षिकः । अत आकाशस्य ब्रह्मकार्यत्वं सिद्धम् ॥

उक्तन्यायमन्यत्रातिदिशति—

**एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥**

अतिदेशत्वान्न पृथक्संगत्यपेक्षा । अत्र वायोरुत्पत्तिरस्ति न वेति संदेहे, छान्दोग्ये वायोरुत्पत्तिर्न श्रूयते ; तैत्तिरीयके च

२. मातरिश्वाधिकरणम्।

श्रूयते। तथा च पूर्ववदनयोर्वाक्ययोर्विरोधप्राप्तौ तत्परिहाराय उत्पत्तिर्गौणी वाच्या। 'सैषानस्तमिता देवता यद्वायुः' इति लयप्रतिषेधाच्च न वायोरुत्पत्तिरिति पूर्वः पक्षः। सिद्धान्तस्तु— एतेन आकाशस्योत्पत्तिमत्त्वव्याख्यानेन वायुरप्याकाशावच्छिन्नब्रह्मजन्यत्वेन व्याख्यातः। लयप्रतिषेधस्त्वापेक्षिकः, अन्यथा प्रतिज्ञाहान्यादेः समानत्वादिति भावः॥

पूर्वमसंभावितोत्पत्तिकयोरपि वियत्पवनयोरुत्पत्तिरस्तीति श्रुतिबलादुक्तम्। तद्वत् ब्रह्मान्तराद्ब्रह्मोत्पत्तिः श्रुतिबलादस्त्विति दृष्टान्तसंगत्येदमाह—

## असंभवस्तु सतोऽनुपपत्तेः॥ ९॥

३. असंभवाधिकरणम्।

अत्र 'न चास्य कश्चिज्जनिता न चाधिपः' इत्यादीनां ब्रह्मणो नित्यत्वप्रतिपादकश्रुतीनाम् 'त्वं जातो भवसि विश्वतोमुखः' इति श्रुत्या विरोधोऽस्ति न वेति संदेहे, विरोध इति पूर्वः पक्षः। सिद्धान्तस्तु— सतः सदात्मकस्य ब्रह्मणः उत्पत्त्यसंभवः। कुतः, अनुपपत्तेः सत्सामान्यात् सत्सामान्यस्योत्पत्त्यनुपपत्तेः, विशेषस्यैव हि घटादेर्मृत्सामान्यजन्यत्वदर्शनात्। जन्मश्रुतिश्च औपाधिकविषया। अतो नित्यं ब्रह्मेत्यविरोधः॥

पूर्वत्र सामान्यात् सामान्योत्पत्तिर्मा भूत्; इह सामान्यात् ब्रह्मणो विशेषस्य तेजस उत्पत्तिरस्त्विति प्रत्युदाहरणसंगत्येद-माह—

**तेजोऽतस्तथा ह्याह ॥ १० ॥**

'वायोरग्निः' इति तेजसो वायुजन्यत्वप्रतिपादकतैत्तिरीयकश्रुतेः 'तत्तेजोऽसृजत' इति तेजसो ब्रह्मजन्यत्वप्रतिपादकच्छान्दोग्यश्रुत्या विरोधोऽस्ति न वेति संदेहे, विरोधोऽस्तीति पूर्वः पक्षः। वायोरपि ब्रह्मकार्यत्वेन तेजः प्रत्युपादानत्वासंभवात् ब्रह्ममात्रजन्यत्वं तेजस इत्यविरोध इत्येकदेशिमतम्। परमसिद्धान्तस्तु—तेजः अतः अस्माद्वायोर्जायते; हि यतः, तथा वायुजन्यत्वम् 'वायोरग्निः' इति श्रुतिराह। न च तर्ह्येतस्य छान्दोग्यश्रुत्या विरोधस्तदवस्थ इति वाच्यम्। वायोर्ब्रह्मजन्यत्वेन वायुभावापन्नब्रह्मजन्यत्वस्य छान्दोग्यश्रुत्यर्थस्यैव 'वायोरग्निः' इति श्रुतेरप्यर्थत्वेनैकार्थत्वादविरोध इति॥

४. तेजोऽधिकरणम्।

पूर्वं तेजसो वायुजन्यत्वं कथितम्। अथ अप्पृथिव्योः क्रमेण बुद्धिस्थत्वात् बुद्धिसंनिधिलक्षणसंगत्या तावदधिकरणद्वयमाह—

**आपः ॥ ११ ॥**

'अतस्तथा ह्याह' इत्यनुवर्तते । 'अग्नेरापः' इति श्रुतेः 'तदपोऽसृजत' इत्यपां ब्रह्मजन्यत्वश्रुत्या विरोधोऽस्ति न वेति संदेहे, विरोधोऽस्तीति पूर्वः पक्षः । अपामग्निदाह्यत्वात् न तज्जन्यत्वमित्यविरोध इत्येकदेशिसिद्धान्तः । परमसिद्धान्तस्तु— आपः अतस्तेजसो जायन्ते; हि यस्मात्, तथा तेजोजन्यत्वम्, 'अग्नेरापः' इति श्रुतिराह । न हि त्रिवृत्कृतयोरिवात्रिवृत्कृतयोः अप्तेजसोः दाह्यदाहकभावः संभवति, विरोधाभावात् । अतः पूर्ववत्तेजोभावापन्नब्रह्मजन्यत्वेन अनयोरैकार्थ्यान्न विरोध इति ॥

५. अबधिकरणम् ।

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'अद्भ्यः पृथिवी' इति पृथिव्याः अब्जन्यत्वश्रुतेः 'ता अन्नमसृजन्त' इत्यन्नस्याब्जन्यत्वश्रुत्या विरोधोऽस्ति न वेति संदेहे, अन्नशब्दस्य ओदनादौ प्रसिद्धत्वेन पृथिवीवाचकत्वाभावाद्विरोध इति पूर्वः पक्षः । सिद्धान्तस्तु— पृथिव्येवात्रान्नशब्देनोच्यते; न ओदनादि । कुतः, अधिकाररूपशब्दान्तरेभ्यः 'तत्तेजोऽसृजत' इति महाभूतोत्पत्त्यधिकारात्, 'यत्कृष्णं तदन्नस्य' इति पृथिवीत्वज्ञापककृष्णरूपस्य श्रवणात्, 'अद्भ्यः पृथिवी' इति पृथिव्या एव तज्जन्यत्वप्रतिपादकशब्दान्तरस्य

६. पृथिव्यधिकाराधिकरणम् ।

सत्त्वाच्च । अतोऽनयोरैकार्थ्येनैकवाक्यत्वात् अविरोध इति सिद्धम् ॥

इत्थमुत्पत्तिक्रमेण महाभूतश्रुतीनामविरोधः प्रत्यपादि । अधुना तानि भूतान्याश्रित्यान्यद्विचार्यत इति आश्रयाश्रयिभावसंगत्येदमाह—

**तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥**

अत्र ब्रह्मणः सर्वसृष्टिकर्तृत्वप्रतिपादकश्रुतेः भूतानां भौतिकस्रष्टृत्वप्रतिपादकश्रुत्या विरोधोऽस्ति न वेति संदेहे, 'आकाशाद्वायुः' इत्यादिना भूतानां स्वस्वकार्योत्पत्तौ स्वातन्त्र्यश्रवणात् तत्प्रतिपादकश्रुत्या विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— स एव परमेश्वरः तत्तत्कार्यगोचरेक्षणात्मकाभिध्यानादेवेक्षिता भूताधिष्ठाता तत्तत्कार्यं सृजति । कस्मात्, तल्लिङ्गात् तस्य परमात्मनः सर्वनियन्तृत्वरूपलिङ्गस्य 'यः पृथिव्यां तिष्ठन्' इत्यादिना श्रुतत्वात् । अतो भूतानां परमेश्वराधिष्ठितानामेव स्रष्टृत्वप्रतिपादकत्वेन अनयोरेकवाक्यत्वात् अविरोध इति ॥

७. तदभिध्यानाधिकरणम् ।

इत्थं भूतानामुत्पत्तिक्रमे चिन्तिते लयक्रमो बुद्धिस्थः स्यात्, सोऽत्र प्रसङ्गाद्विचार्यत इति प्रसङ्गसंगत्येदमाह—

**विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥**

अस्य प्रासाङ्गिकविचारस्य अद्वैतब्रह्मध्यानं फलम् । अत्र किं भूतानां श्रुतोत्पत्तिक्रमेणैव लयक्रमः, उत सोपानपरम्परारूढस्य व्युत्क्रमेणावरोहणवत् व्युत्क्रमेणैव लयक्रम इति संदेहे, कल्प्यापेक्षया क्लृप्तस्य लघुत्वात् श्रुतोत्पत्तिक्रमेणैवेति पूर्वः पक्षः । सिद्धान्तस्तु—अत उत्पत्तिक्रमात् विपरीतक्रमेणैव लयक्रमः, स्वकारणे कार्याणां लयदर्शनात् । उपपद्यते च व्युत्क्रमेणैव लयक्रमः । इतरथा सति कार्ये कारणस्य नाशः स्यात् ; तच्चानिष्टमित्यर्थः ॥

८. विपर्ययाधिकरणम् ।

भूतोत्पत्तिलयक्रमविचारस्य यत्प्रयोजनम् , तदेव करणोत्पत्तिक्रमविचारस्येत्येकप्रयोजनकत्वसंगत्येदमाह—

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

पूर्वोक्तक्रमः करणोत्पत्तिक्रमेण विरुध्यते न वेति संदेहे, विज्ञायते अनेन इति विज्ञानशब्देन बुद्धिः इन्द्रियाणि च गृह्यन्ते । संशयात्मकमन्तःकरणं मनः । तानीन्द्रियबुद्धिमनांसि भूतानामात्मनश्च अन्तरा अन्तराले तल्लिङ्गात् तस्याः सृष्टेर्गमकात् 'एतस्माज्जायते प्राणः' इत्यादिगमकवाक्यादनुक्रम्यन्ते । तथा च आत्मनः सकाशादिन्द्रियबुद्धिमनांसि, तेभ्यश्च भूतानि इत्यनेन क्रमेण विरुध्यत

९. अन्तराविज्ञानाधिकरणम् ।

इति चेत् इति पूर्वः पक्षः। सिद्धान्तस्तु— नाविशेषात् इन्द्रियबुद्धिमनसां भौतिकत्वेन भूतोत्पत्तिक्रमादिन्द्रियाद्युत्पत्तिक्रमस्य अविशेषात् येन क्रमेण भूतोत्पत्तिः, तेनैव क्रमेण भौतिकोत्पत्तिरित्यतो न विरुध्यत इत्यर्थः । 'एतस्माज्जायते' इत्यादिश्रुतिश्च सर्वेषामात्मनः सकाशादुत्पत्तिमात्रं ब्रूते, न क्रममिति भावः । तस्मान्न केनापि वाक्येन भूतसृष्टिवाक्यानां विरोध इति सिद्धम् ॥

इत्थं पूर्वाधिकरणेषु तत्पदार्थब्रह्मसिद्ध्यै भूतकरणोत्पत्तिश्रुतिविरोधो निरस्तः । संप्रति आपादसमाप्तेस्त्वंपदार्थशुद्ध्यै जीवविषयश्रुतिविरोधो निरस्यते । तत्र यथा पूर्वं करणोत्पत्तिश्रुत्या भूतश्रुतेरविरोध इत्युक्तम्, न तथेह जीवोत्पत्तिशास्त्रेणाविरोधः; तदुत्पत्तौ भूतोत्पत्तिक्रमभङ्गस्यावश्यकत्वादिति प्रत्युदाहरणावान्तरसंगत्येदमाह—

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

अत्र 'न जीवो म्रियते' इति जीवनित्यत्वशास्त्रस्य जीवोत्पत्तिनाशनिमित्तकजातेष्ट्यादिशास्त्रेण विरोधोऽस्ति न वेति संदेहे, देवदत्तो जातो मृतश्चेति लौकिकव्यपदेशानुगृहीतजातकर्मादिशास्त्रेण विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु—

योऽयं लौकिकः तद्व्यपदेशः तयोः जन्ममरणयोः व्यपदेशः, स

१०. चराचर-व्यपाश्रया-धिकरणम।

चराचरव्यपाश्रयः स्थावरजङ्गमदेहविषयो मुख्यः; जीवे तु भाक्तो गौणः स्यात्। कुतः, जन्ममरणव्यपदेशस्य तद्भावभावित्वात् देहोत्पत्तिनाशान्वयव्यतिरेकानुविधायित्वादित्यर्थः। देहप्रादुर्भावाद्यपेक्षयैव जातकर्मादिविधानमिति न तेन शास्त्रेण जीवनित्यत्वशास्त्रस्य विरोध इति भावः ॥

इत्थं देहोत्पत्तिनाशयोः सतोः जीवस्य जन्मनाशौ मा भूताम्; कल्पाद्यन्तयोः जीवस्य जन्मनाशौ किं न स्याताम् ——इति प्रत्युदाहरणसंगत्येदमाह——

## नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

अत्राविकृतस्यैव ब्रह्मणो जीवभावेन प्रवेशवाक्यस्य जीवस्य परस्मादात्मनः 'सर्व एत आत्मनो व्युच्चरन्ति' इत्यु-

११. आत्माधि-करणम्।

त्पत्तिवादिवाक्येन विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु—आत्मा जीवः नोत्पद्यते। कुतः, अश्रुतेः उत्पत्तिप्रकरणेषु जीवोत्पत्तेरश्रुतेः, ताभ्यः 'स वा एष महानज आत्मा....' 'अजो नित्यः....' इत्यादिश्रुतिभ्यो जीवस्य नित्यत्वावगमाच्चेत्यर्थः। औपाधिकजन्मालम्बनं जीवजनिवाक्यमिति न तेन

प्रवेशवाक्यस्य विरोध इति भावः ॥

पूर्वसिद्धजीवानुत्पत्तिमुपजीव्य उत्तरसिद्धान्तोत्थानात् हेतु-हेतुमद्भावसंगत्येदमाह—

## ज्ञोऽत एव ॥ १८ ॥

अत्र 'आत्मैवास्य ज्योतिः' इत्यादिस्वयंज्योतिष्ट्वश्रुतेः 'पश्यंश्चक्षुः' इत्याद्यागन्तुकज्ञानवत्त्वश्रुत्या विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— जीवो ज्ञः स्वयंज्योतिःस्वरूपः। कुतः, अत एव अनुत्पत्तिमत्त्वादेवेत्यर्थः। 'पश्यंश्चक्षुः' इत्यादिश्रुतिः आगन्तुकवृत्त्यभिप्रायेति न तया स्वयंज्योतिष्ट्वश्रुतेर्विरोध इति भावः ॥

१२. ज्ञाधिकरणम्।

इत्थं जीवस्य ब्रह्माभेदयोग्यत्वाय नित्यत्वं स्वप्रकाशत्वं चाभिधाय, अधुना स्वप्रकाशत्वादिवत् बहिष्टमपरिच्छिन्नत्वमणुत्वनिरासेन साधयतीत्यान्तरबहिर्भावसंगत्येदमाह—

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

अत्र 'सर्वव्यापी' इति सर्वगतत्वश्रुतेः 'एषोऽणुरात्मा' इत्यणुत्वश्रुत्या विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः

१३. उत्क्रान्ति-गत्यधि-करणम् । पक्षः । कस्मात्, जीवस्य 'अस्माच्छरीरादुत्क्रामति' 'चन्द्रमसमेव ते सर्वे गच्छन्ति' 'तस्माल्लोकात्पुनरेति' इत्युत्क्रान्तिगत्यागतीनां श्रवणात् अणुर्जीवः । अतोऽस्ति विरोध इत्यर्थः ॥

अपि च—

**स्वात्मना चोत्तरयोः ॥ २० ॥**

यद्यप्युत्क्रान्तिर्देहस्वाम्यनिवृत्तिरूपा विभुत्वे संभवति, तथापि उत्तरयोः गत्यागत्योः स्वात्मना जीवात्मना संबद्धत्वात्ते आत्मनोऽणुत्वे संभवत इत्यर्थः ॥

तर्हि सर्वगतत्वश्रुतिविरोध इत्याशङ्क्य समाधत्ते—

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥**

नायं जीवोऽणुः अतच्छ्रुतेः अनणुत्वश्रुतेः 'सर्वव्यापी' इत्यादिना सर्वगतत्वश्रुतेरिति चेत्, न; इतराधिकारात् इतरस्य ब्रह्मणः सर्वेषु वेदान्तेषु प्रधानतया ज्ञेयत्वेन प्रकृतत्वात् तस्यैव सर्वगतत्वश्रुतिः, न जीवस्येत्यर्थः ॥

जीवस्याप्यणुत्वश्रुतिरस्तीत्याह—

**स्वशब्दोन्मानाभ्यां च ॥ २२ ॥**

'एषोऽणुरात्मा' इति स्वस्याणुत्वस्य वाचकः एतच्छब्दः;

'वालाग्रशतभागस्य' इत्यादि उन्मानम्; उद्धृत्य सर्वेभ्यः स्थूलपरिमाणेभ्यः मानम् उन्मानम्, अत्यन्तापकृष्टपरिमाणमिति यावत्; ताभ्यां जीवोऽणुरेवेत्यर्थः ॥

ननु आत्मनोऽणुत्वे जाह्नवीतोयनिमग्नस्य देहव्यापिशैत्योपलब्धिविरोध इत्यत आह—

**अविरोधश्चन्दनवत् ॥ २३ ॥**

यथा चन्दनबिन्दुः शरीरैकदेशस्थः शरीरव्यापि सुखं जनयति, तथा जीवोऽपि देहव्यापिनं शैत्याद्युपलम्भं करिष्यतीत्यविरोध इत्यर्थः ॥

दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमाशङ्क्य परिहरति—

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥**

नात्र चन्दनदृष्टान्तः, अवस्थितिवैषम्यात्; प्रत्यक्षेण चन्दनबिन्दोरेकदेशेऽवस्थितिः ज्ञायते, जीवस्य तु नैवमित्यतुल्यत्वादिति चेत्, न। कुतः, अभ्युपगमात् जीवाणुत्वस्य। तत् कस्मात्, हृदि हि; यस्मात् अल्पपरिमाणे हृदि जीवः पठ्यते 'हृद्यन्तर्ज्योतिः' इत्यादौ, तस्मात् जीवस्याणुत्वमभ्युपगम्यत इति न दृष्टान्तवैषम्यमित्यर्थः ॥

ननु सावयवतया चन्दनबिन्दोः सर्वशरीरव्यापकत्वम्, न तथा जीवस्याणोः सावयवत्वम्; येन शरीरव्यापित्वं स्यादित्यपरितुष्टया पक्षान्तरमाह—

**गुणाद्वा लोकवत् ॥ २५ ॥**

आत्मनोऽणुत्वेऽपि तन्निष्ठज्ञानगुणस्य व्यापकत्वाङ्गीकारात् व्यापकगुणाद्व्यापिकार्यं भविष्यति। लोकवत् यथा लोके गृहनिष्ठप्रदीपस्याल्पत्वेऽपि प्रभात्मकगुणवशात् गृहव्यापिप्रकाशादिकार्यं संभवति, तद्वदित्यर्थः ॥

ननु गुणिव्यतिरेकेण गुणस्य वृत्तेरन्यत्रादर्शनात्, तत्कथमित्याशङ्कयाह—

**व्यतिरेको गन्धवत् ॥ २६ ॥**

यथा गुणस्यापि सतो गन्धस्य गुणिव्यतिरेकेण वृत्तिः, पुष्पपेटिकातो दूरे पर्यटतः पुंसो गन्धोपलम्भदर्शनात्; तद्वत् गुणिव्यतिरेको ज्ञानस्येत्यर्थः ॥

अधुना ज्ञानेनैवात्मनो देहव्याप्तिरित्यत्र श्रुतिमाह—

**तथा च दर्शयति ॥ २७ ॥**

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय, तस्यैव

'आ लोमभ्य आ नखाग्रेभ्यः' इति श्रुतिः ज्ञानेन समस्तशरीरव्यापित्वं दर्शयतीत्यर्थः ॥

तत्रैव हेत्वन्तरमाह—

**पृथगुपदेशात् ॥ २८ ॥**

'प्रज्ञया शरीरं समारुह्य' इत्यात्मज्ञानयोः कर्तृकरणभावेन पृथगुपदेशात् गुणद्वारा अस्य शरीरव्यापित्वं गम्यते । तथा च व्यापकं ज्ञानम्, जीवस्तु अणुः इत्यणुत्वश्रुत्या सर्वगतत्वश्रुतेर्विरोध इति पूर्वः पक्षः ॥

सिद्धान्तस्तु—

**तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥**

तुः पूर्वपक्षव्यावर्तकः । नैवाणुर्जीवः, सर्वगतस्यैव ब्रह्मणो जीवभावेन प्रवेशश्रवणात् तादात्म्योपदेशाच्च । कथं तर्हि जीवे अणुत्वव्यपदेशः, तद्गुणसारत्वात् तस्याः बुद्धेः गुणाः अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयः ते गुणाः सारं प्रधानं यस्य जीवस्य स तथा तस्य भावः तत्त्वं तस्मात्, तद्व्यपदेशः अणुत्वादिव्यपदेशः, न स्वाभाविकः । प्राज्ञवत् यथा प्राज्ञस्य परमात्मनः सगुणोपासनेषु दहराद्युपाधिवशात् अणुत्वादिकं व्यपदिश्यते, तद्वदित्यर्थः ॥

ननु आत्मन्यणुत्वादिसंसारस्य बुद्ध्युपाधिकत्वे कदाचित् बुद्ध्या वियोगे संसारो न स्यादित्यत आह—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

बुद्धिसंयोगस्य यावत् आत्मनः सम्यग्दर्शनेन संसारो न निवर्तते, तावद्भावित्वान्नोक्तदोषः । तत् कस्मात्, तद्दर्शनात् देहवियोगेऽपि तस्य बुद्धिसंयोगस्य 'स समानः सन्नुभौ लोकावनुसंचरति' इत्यादिश्रुतौ दर्शनादित्यर्थः ॥

ननु सुषुप्तौ ब्रह्मसंपत्तिकार्यनाशयोरभ्युपगमात न बुद्धिसंयोगस्य यावदात्मभावित्वमित्यत आह—

## पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

यथा बाल्ये पुंस्त्वादेः सत एव यौवनेऽभिव्यक्तिः, तद्वत् तस्य बुद्धिसंयोगादेः सुषुप्तौ सूक्ष्मात्मना सत एव अभिव्यक्तिसंभवात् यावदात्मभावित्वं न विरुध्यत इत्यर्थः ॥

ननु बुद्ध्यपरपर्यायान्तःकरणे किं प्रमाणम्, यत्प्रयुक्तः संसारः स्यादित्यत आह—

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतर-
नियमो वान्यथा ॥ ३२ ॥**

इदमन्तःकरणमवश्यमभ्युपगन्तव्यम् । अन्यथा अनभ्युपगमे सर्वेषामिन्द्रियाणां स्वस्वविषयसंनिधानदशायां नित्योपलब्धिप्रसङ्गः युगपत्सर्वविषयोपलब्धिप्रसङ्गः, मनोव्यतिरिक्तज्ञानसामग्र्याः सत्त्वात्; यदि सत्यामपि सामग्र्यां ज्ञानाभावः, तदा नित्यानुपलब्धिप्रसङ्गः कस्याप्युपलब्धिर्न स्यात् । अथवा एकस्योपलब्धिमितरेषामनुपलब्धिमिच्छता ज्ञानसामग्रीमध्ये अन्यतरस्य आत्मनः इन्द्रियस्य वा नियमः शक्तिप्रतिबन्धोऽङ्गीकर्तव्यः । स न संभवति, निर्धर्मक आत्मनि शक्तेरभावात् । नापीन्द्रियस्य, शक्तेरान्तरत्वेन तद्धर्मत्वायोगात् । तस्माद्व्यासङ्गस्थले इच्छैव नियामिका । तस्याश्च मनोधर्मत्वेन तदन्यथानुपपत्त्या 'कामः संकल्पः' इत्यादिश्रुत्या च सिद्धमन्तःकरणम्, तत्प्रयुक्तश्च आत्मन्यणुत्वादिसंसार इति । तस्मादौपाधिकाणुत्वश्रुत्या न वास्तवसर्वगतत्वश्रुतेर्विरोध इति सिद्धम् ॥

इत्थं च अणुत्वं पराणुद्य सर्वगतत्वं स्वयंज्योतिष्ट्वादिवत् बहिष्ठं प्रतिष्ठापितम् । अधुना ततो बहिष्ठं कर्तृत्वं बुद्धिकर्तृत्वव्यासेधेन साधयतीत्यान्तरबहिर्भावसंगत्येदमाह—

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

अत्र तद्गुणसारत्वस्यैव प्रपञ्चनात् अत्र मिथः श्रुत्योः विरोधपरिहारौ न विचारयितव्यौ ; किं तु आत्मनः कर्तृत्वाकर्तृत्वे। तत्र किं बुद्धिः कर्त्री, उत जीव इति संदेहे, परिणामित्वात् बुद्धिरिति पूर्वः पक्षः। सिद्धान्तस्तु—आत्मैव कर्ता न बुद्धिः। कुतः, कर्तुरपेक्षितोपायबोधकविधिशास्त्रस्य अर्थवत्त्वात्। यदि बुद्धिः कर्त्री, फलभोक्ता चात्मेत्युच्येत, तर्हि तादृशविधिशास्त्रमनर्थकमापद्येत। अतो न केवलबुद्धेः कर्तृत्वम्, अपि तु आत्मन इति ॥

१४. कर्त्रधिकरणम्।

किं च—

## विहारोपदेशात् ॥ ३४ ॥

'स्वे शरीरे यथाकामं परिवर्तते' इति जीवप्रकरणे स्वप्नावस्थायां विहारस्य संचरणस्य उपदेशात्, अकर्तुः संचरणायोगात् आत्मनः कर्तृत्वमित्यर्थः ॥

किं च—

## उपादानात् ॥ ३५ ॥

'प्राणानां विज्ञानेन विज्ञानमादाय' इत्यात्मनो ग्रहणशक्त्युपादानश्रवणात्, अकर्तुरुपादानायोगात् आत्मनः कर्तृत्वमित्यर्थः ॥

अपि च—

**व्यपदेशाच्च क्रियायां न चेन्निर्देश-विपर्ययः ॥ ३६ ॥**

'विज्ञानं यज्ञं तनुते' इत्यादौ लौकिकवैदिकक्रियायां विज्ञानशब्दवाच्यस्यात्मनः कर्तृत्वव्यपदेशात् यदि विज्ञानशब्दो बुद्धिपरः जीवपरो न चेत्, तर्हि निर्देशविपर्ययः स्यात्; बुद्धेः करणत्वेन विज्ञानमिति कर्तृत्वनिर्देशस्य विज्ञानेनेति करणत्वविपर्ययः स्यादित्यर्थः ॥

ननु स्वतन्त्रस्यात्मनः कर्तृत्वेऽनिष्टं न कुर्यात् इष्टमेव कुर्यादित्यत आह—

**उपलब्धिवदनियमः ॥ ३७ ॥**

यद्वदुपलब्धौ स्वतन्त्रोऽप्यात्मा इष्टमनिष्टं चोपलभते, तद्वत् इष्टमनिष्टं च संपादयतीति अनियम इत्यर्थः ॥

इतश्चात्मन एव कर्तृत्वं न बुद्धेरित्याह—

**शक्तिविपर्ययात् ॥ ३८ ॥**

बुद्धेः कर्तृत्वे करणशक्तिविपर्ययात् करणशक्तिर्हीयेतेति यावत् ॥

ज्ञानसाधनविध्यन्यथानुपपत्त्यापि आत्मनः कर्तृत्वं स्वीकार्यमित्याह—

## समाध्यभावाच्च ॥ ३९ ॥

आत्मनोऽकर्तृत्वे 'आत्मा वा अरे द्रष्टव्यः' इत्यादौ विहितस्य ब्रह्मसाक्षात्कारसाधनस्य समाधेरभावप्रसङ्गात् आत्मनः कर्तृत्वसिद्धिः ॥

इत्थं सर्वगतत्वाद्बहिष्ठं कर्तृत्वं प्रतिष्ठापितम् । अधुना तत् अध्यस्तमात्मनीति प्रतिपादयतीत्युपजीव्योपजीवकभावसंगत्येदमाह—

## यथा च तक्षोभयथा ॥ ४० ॥

१५. तक्षाधिकरणम् ।

अत्र 'असङ्गो ह्ययं पुरुषः' इत्यसङ्गत्वश्रुतेः कर्तुरिष्टसाधनबोधकविधिवाक्येन विरोधोऽस्ति न वेति संदेहे, पूर्वोक्तशास्त्रार्थवत्त्वादिहेतुभिः कर्तृत्वस्य स्वाभाविकतया तत्प्रतिपादकविधिशास्त्रेण विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— न स्वाभाविकमात्मनः कर्तृत्वम्, अपि तु औपाधिकम् । यथा लोके उभयथा तक्षा वास्यादीनि करणान्यपेक्ष्य कर्ता सन् दुःखी भवति, अनपेक्ष्य तु स्वरूपेणाकर्ता सुखी भवति, तथात्मापि बुद्ध्यादिकरणान्यपेक्ष्य कर्ता संसरति, अनपेक्ष्य तु स्वभावतोऽकर्ता

परमानन्दघन एव भवति। विधिशास्त्रं तु कर्तृत्वं विना अनुपपन्नं तत्साधयति, न तु तस्य स्वाभाविकत्वमपीति न तेनासङ्गत्वश्रुतेर्विरोध इति सिद्धम् ॥

औपाधिकं कर्तृत्वमुपजीव्य तत् ईश्वरायत्तमिति साधयितुं पूर्वोक्तसंगत्यैवेदमाह—

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

अत्र च 'एष ह्येव साधु कर्म कारयति' इत्यादिश्रुतेः विध्यादिशास्त्रेण विरोधोऽस्ति न वेति संदेहे, रागद्वेषादिव-

१६. परायत्ताधिकरणम्।

शात् स्वत एवात्मनः कर्तृत्वसंभवात् तत्प्रतिपादकविध्यादिशास्त्रेण विरोधोऽस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— सौत्रतुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। न स्वतो जीवस्य कर्तृत्वादिसिद्धिः; किं तु परात् परस्मादीश्वरात् कर्माध्यक्षादविद्यातिमिरान्धस्य कर्तृत्वादिसंसारसिद्धिः, तदनुग्रहे तु विज्ञानेन मोक्षसिद्धिर्भविष्यति। कुतः, तच्छ्रुतेः 'एष ह्येव साधु कर्म कारयति' इत्यादिकायाः श्रुतेः तस्येश्वरस्य हेतुकर्तृत्वमवसीयत इत्यर्थः ॥

ननु ईश्वरस्य कारयितृत्वे वैषम्यनैर्घृण्ये स्यातामित्यत आह—

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धा-वैयर्थ्यादिभ्यः ॥ ४२ ॥

तुरुक्तशङ्कानिरासार्थः। जीवेन कृतो यः प्रयत्नो धर्माधर्म-लक्षणः तदपेक्ष एवेश्वरोऽन्यस्मिन्नपि जन्मनि धर्मादिकं कार-यति तदपेक्षश्च सुखादिफलं प्रयच्छतीति न वैषम्यनैर्घृण्ये प्रसज्येते। अनादित्वात्संसारस्य पूर्वजन्मकृतधर्माद्यपेक्षा युक्तैव। ननु कस्मात्तदपेक्षत्वमत आह— विहितप्रतिषिद्धावै-यर्थ्यादिभ्यः ईश्वरस्य कर्मापेक्षत्वे 'ज्योतिष्टोमेन यजेत' 'ब्राह्मणो न हन्तव्यः' इति द्वयोर्विहितप्रतिषिद्धयोः अवैयर्थ्यं भवति, अन्यथा विधिनिषेधशास्त्रमनर्थकमेव स्यात्। एवं च ईश्वराधीनकर्तृत्वप्रतिपादकविध्यादिशास्त्रेण 'एष ह्येव साधु कर्म....' इत्यादिशास्त्रस्य न विरोध इति सिद्धम्॥

इत्थं नित्यत्वं स्वप्रकाशत्वं व्यापित्वमकर्तृत्वं च आत्मनोऽ-भिधाय, तदनन्तरं तस्य ब्रह्माभेदयोग्यस्य ब्रह्मैक्यं साधयतीति हेतुहेतुमद्भावसंगत्येदमाह—

## अंशो नानाव्यपदेशादन्यथा चापि दाश-कितवादित्वमधीयत एके ॥ ४३ ॥

अत्र 'तत्त्वमसि' इत्याद्यभेदश्रुतिजातस्य 'य आत्मनि

तिष्ठन्’ इत्यादिभेदश्रुतिजातेन विरोधोऽस्ति न वेति संदेहे,

१७. अंशाधिकरणम् । जीवेश्वरयोः पूर्वोक्तोपकार्योपकारकभावस्य स्वामिभृत्यवत् भेदाधीनसंबन्धसापेक्षत्वात् तदभेदश्रुतिजातेन विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— जीवः ईश्वरस्य अंश इव अंशः, न तु स्वाभाविकोंऽशः ; तस्य ‘निष्कलम्’ इत्यादिना निरंशत्वश्रवणात् । अतः कल्पितांशो जीवः । कुतः पुनर्जीवेश्वरयोरंशांशिभावः, ‘य आत्मनि तिष्ठन’ इत्यादिना तयोर्नानाव्यपदेशात् नानात्वस्य च व्यपदेशात्, अन्यथा चापि अनानात्वस्य चापि व्यपदेशात् । तथा हि एके शाखिनः आथर्वणिकाः ‘ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः’ इति दाशकितवादित्वमधीयते । दाशाः कैवर्ताः, दासाः भृत्याः, कितवाः द्यूतकृतः, तद्भावमामनन्ति इत्यतोऽनानात्वस्याभेदस्य च व्यपदेशः । तत्र भेदवादिश्रुतिजातस्य प्रत्यक्षसिद्धभेदानुवादेनाभेदपरत्वात् कल्पितभेदवानंशो जीव इति ॥

किं च—

## मन्त्रवर्णाच्च ॥ ४४ ॥

‘पादोऽस्य विश्वा भूतानि’ इति मन्त्रवर्णात् परमेश्वरस्याविद्याकल्पितपादोंऽशो भूतशब्दवाच्यो जीव इति गम्यते ॥

किं च—

## अपि च स्मर्यते ॥ ४५ ॥

'ममैवांशो जीवलोके जीवभूतः सनातनः' इति भगवद्गीतासु च ईश्वरस्याविद्याकल्पितांशो जीव इति स्मर्यते ॥

ननु जीवस्येश्वरांशत्वे तद्दुःखेनेश्वरस्य दुःखित्वं स्यादित्यत आह—

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवोऽविद्यावेशवशाद्देहाद्यात्मभावमिव गतः तत्कृतेन दुःखेन दुःख्यहमित्यभिमन्यते, नैवं परः ईश्वरः। प्रकाशादिवत् यथा सौरः चान्द्रमसो वा प्रकाशो नभो व्याप्य वर्तमानो वक्रकाष्ठाद्युपाधिकृतवक्रभावमिवापन्नोऽपि न वस्तुतो वक्रभावमापद्यते, तद्वत्। जीवोऽपि न परमार्थतो दुःखित्वमभिमन्यत इत्यर्थः ॥

## स्मरन्ति च ॥ ४७ ॥

'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः। न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥' इत्यादिभिः व्यासादय ईश्वरस्य सांसारिकदुःखासंस्पर्शित्वं स्मरन्तीत्यर्थः ॥

ननु 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना आत्मभेदमात्रनिषेधात्, कथं मित्रं सेव्यं शत्रवः परिहर्तव्या इत्याद्यनुज्ञापरि-

हारौ स्यातामित्यत आह—

**अनुज्ञापरिहारौ देहसंबन्धा-
ज्ज्योतिरादिवत् ॥ ४८ ॥**

उक्तावनुज्ञापरिहारौ सर्वत्रात्मनोऽखण्डैकरसत्वेऽपि देह-तादात्म्यसंबन्धात्संगच्छेते । ज्योतिरादिवत् यथा ज्योतिषोऽग्ने-रेकत्वेऽपि श्मशानसंबन्ध्यग्निः परिहार्यो नेतरः, तद्वदात्मापी-त्यर्थः ॥

ननु एवमपि स्वाम्येकत्वात् कर्मफलसंकरो दुर्वार इत्यत आह—

**असंततेश्चाव्यतिकरः ॥ ४९ ॥**

कर्मफलसंबन्धस्याव्यतिकरः असंकरः । कुतः, असंततेः उपाधिपरिच्छिन्नस्यात्मनः सर्वैः शरीरैरसंबन्धादित्यर्थः ॥

किं च—

**आभास एव च ॥ ५० ॥**

आभास एवैष जीवः परस्य आत्मनः सूर्यप्रतिबिम्बवत् । ततश्च यथैकस्मिन् प्रतिबिम्बे कम्पमाने प्रतिबिम्बान्तरं न कम्पते, तथा एकस्मिन् जीवे कर्मफलसंबन्धिनि न जीवान्त-रस्य तत्संबन्ध इति संकरः सुपरिहरः । स्वाभाविकात्मनाना-त्ववादे तु कर्मफलसंकरो दुर्वार इति दिक् ॥

ननु नानात्ववादे अदृष्टनियमात् कर्मफलनियम इति चेत् तत्राह—

## अदृष्टानियमात् ॥ ५१ ॥

सांख्यमते प्रधानसमवेतमदृष्टम्, तस्य सर्वात्मसाधारण्यात् स दोषस्तदवस्थः; न्यायमतेऽप्यदृष्टहेतुमनःसंयोगस्य सर्वात्माविशेषात् इदमस्यादृष्टम् इदमस्य नेत्येवंरूपस्य अदृष्टनियमस्याभावात् फलानियम इत्यर्थः ॥

ननु अहमिदं फलं प्राप्नवानीत्याद्यभिसंध्यादयः प्रत्यात्मनियताः सन्तः स्वप्रयोज्यादृष्टनियमहेतवो भविष्यन्तीत्यत आह—

## अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादिष्वपि साधारणमनःसंयोगसाध्येषु अदृष्टनियमहेतुत्वाभाव इत्युक्तदोषस्तदवस्थः ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

ननु आत्मनां विभुत्वेऽपि स्वस्वशरीरावच्छिन्न एवात्मप्रदेशे मनःसंयोग इति भवत्यभिसंध्यादिनियम इति चेत्, न । सर्वात्मनां सर्वशरीरेष्वन्तर्भावात् अस्यात्मन इदं शरीरमिति नियमाभावात् प्रदेशकल्पना न संभवतीत्युक्तसंकर-

स्तदवस्थ एव । अस्मत्पक्षे जीवभेदस्याविद्यकत्वेन न संकरः । तथा च अविद्यानिमित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयतः तत्त्वमस्यादिश्रुतिजातस्य आविद्यकभेदानुवादिश्रुतिजातेन न विरोध इति सिद्धम् । तदेवं भूतभोक्तृविषयश्रुतीनां मिथो विरोधव्यासेधेन प्रामाण्याद्ब्रह्मणि समन्वयः सिद्ध इत्यतिशोभनम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्व-
प्रकाशिकायां द्वितीयाध्यायस्य
तृतीयः पादः ॥



ॐ

## चतुर्थः पादः ॥



इत्थं पूर्वपादे भूतभोक्तृश्रुतिविरोधं विधूय, अधुना भौतिकेन्द्रियादिश्रुतिविरोधं परिहर्तुं पादान्तरमवतारयन्, पूर्वाधिकरणे कर्तृस्वरूपावधारणेन बुद्धिस्थानां तदुपकरणानामिन्द्रियाणाम् उत्पत्तिं साधयतीति बुद्धिस्थसंगत्येदमाह—

**तथा प्राणाः ॥ १ ॥**

अत्र च 'एतस्माज्जायते प्राणो मनः....' इत्यादीन्द्रियोत्पत्तिश्रुतेः 'ऋषयो वाव तेऽग्रेऽसदासीत्' इत्यादिप्रागुत्पत्ते-रिन्द्रियसद्भावश्रुत्या विरोधोऽस्ति न वेति संदेहे, विरोधोऽस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— तथा प्राणाः तथा 'एतस्माज्जायते....' इत्युदाहृतवाक्यस्थाकाशादिवत् प्राणा इन्द्रियाणि जायन्ते, उत्पत्तिश्रुतेरविशेषादित्यर्थः ॥

१. प्राणोत्पत्त्यधिकरणम्।

ननु सृष्टेः प्राक् इन्द्रियसद्भावश्रवणात् उत्पत्तिश्रुतिर्गौणी इति चेत् तत्राह—

## गौण्यसंभवात् ॥ २ ॥

गौण्या उत्पत्तिश्रुतेरसंभवो गौण्यसंभवः तस्मात् , अन्यथा एकविज्ञानप्रतिज्ञा हीयेतेत्यर्थः । सद्भावश्रुतिस्तु हिरण्यगर्भात्मकावान्तरप्रकृतिविषया इति न तया उत्पत्तिश्रुतेर्विरोध इति भावः ॥

इन्द्रियोत्पत्तिर्मुख्या इत्यत्र हेत्वन्तरमाह——

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

तत् तत्र 'एतस्माज्जायते' इत्यादिवाक्ये जन्मवाचिपदस्य खवाय्वादिषु मुख्यस्य तदपेक्षया प्राचीनेषु प्राणादिषु श्रुतेः श्रवणादित्यर्थः ॥

ननु 'तत्तेजोऽसृजत' इति भूतमात्रश्रवणात् तत्कथमित्याशङ्क्याह——

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' इति भूतमात्रोत्पत्तिः पठ्यते, तथापि 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' इति मनःप्राणसहिताया वाचः ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानात् अस्त्युत्पत्तिश्रुतिरित्यतो न विरोध इति सिद्धम् ॥

इत्थमिन्द्रियाणामुत्पत्तिं प्रसाध्य तेभ्यो जीवस्य विवेकार्थं तदाश्रितसंख्यां निर्णेतुकामः आश्रयाश्रयिभावसंगत्येदमाह—

**सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥**

'सप्त प्राणाः प्रभवन्ति तस्मात्' इति इन्द्रियाणि सप्त संकीर्त्यन्ते; कचिदष्टौ; कचिन्नव; कचिद्दश; कचिदेकादश; इत्येवं सप्तत्वाष्टत्वादिसंख्याश्रुतीनां परस्परविरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वपक्षे एकदेशिसिद्धान्तः— सप्तेन्द्रियाणि । कुतः, गतेः श्रुत्या सप्तत्वावगतेः 'सप्त वै शीर्षण्याः प्राणाः' इति शीर्षण्यत्वेन विशेषितत्वाच्च । अष्टत्वादिसंख्याश्रवणं तु एकस्यैवान्तःकरणस्य वृत्तिभेदाभिप्रायमिति न श्रुतीनां विरोध इति ॥

२. सप्तगत्यधिकरणम् ।

तदेकदेशिमतं दूषयति—

**हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥**

तुरेकदेशिमतनिरासार्थः । 'हस्तौ वै ग्रहः' इत्यादिना हस्तादयो व्यतिरिक्ताः प्राणाः श्रूयन्ते । सप्तत्वसंख्यायामसंभावितान्तर्भावे सप्तत्वातिरेके स्थिते, सप्तत्वसंख्या एकादशत्वसंख्यायामन्तर्भावयितुं शक्यते । अतो नैवं मन्तव्यम्— 'सप्तैव प्राणाः' इति । एवं सूत्रद्वयं योजनीयम्— सप्तैवेन्द्रियाणि,

'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति प्राणादिसप्तानामेव गतेः श्रवणात् । ननु सर्वशब्दश्रवणात् कथं सप्तानामेवेति तत्राह— विशेषितत्वाच्च 'स यत्रैष चाक्षुषः पुरुषः....' इत्यादिना चक्षुरादिसप्तानामेवोत्क्रान्तौ विशेषितत्वात् । अतः सर्वशब्दस्य प्रकृतापेक्षत्वात् सप्तैवोत्क्रामन्ति इति प्राप्ते, उच्यते—– हस्तादयोऽप्यपरे प्राणा उत्क्रामन्ति 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्ति अथ रोदयन्ति' इत्येकादशानां प्राणानामुत्क्रान्तिश्रवणात् सर्वेषामेवोत्क्रमणे स्थिते सति, नैवं यत्सप्तैवेति । तस्मान्न श्रुतीनां मिथो विरोध इति सिद्धम् ॥

ननु इन्द्रियाणामुत्क्रान्तिर्न संभवति, तेषामपरिच्छिन्नाहंकारजन्यत्वेन विभुत्वादित्याक्षेपसंगत्येदमाह—

**अणवश्च ॥ ७ ॥**

३. प्राणाणुत्वाधिकरणम् ।

अत्रोत्क्रान्त्यादिश्रुतेः 'प्राणाः सर्वेऽनन्ताः' इति इन्द्रियविभुत्वश्रुत्या विरोधोऽस्ति न वेति संदेहे, विरोधोऽस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— इमे प्राणा अणवः परिच्छिन्नाः, इन्द्रियाग्राह्यत्वेन सूक्ष्मत्वात् । विभुत्वश्रुतेरुपासनापरत्वात् न तयोत्क्रान्त्यादिश्रुतेर्विरोध इति **सिद्धम्** ॥

इत्थं मुख्यप्राणातिरिक्तप्राणानां सृष्ट्यादिकं शिष्ट्वा मुख्येऽपि प्राणे प्रथमाधिकरणन्यायमतिदिशति—

**श्रेष्ठश्च ॥ ८ ॥**

अतिदेशत्वात् न पृथक्संगत्यपेक्षा । अत्र 'एतस्माज्जायते प्राणः' इति मुख्यप्राणोत्पत्तिश्रुतेः 'आनीदवातम्' इति सृष्टेः प्राक् महाप्रलये प्राणसद्भावश्रुत्या विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— इन्द्रियवत् श्रेष्ठोऽपि प्राणो ब्रह्मणो जायते । अतः 'आनीदवातम्' इति श्रुतौ आनीच्छब्दः कारणसद्भावं दर्शयति, अवातं प्राणरहितमिति विशेषणात् । न तया श्रुत्या प्राणोत्पत्तिश्रुतेर्विरोध इति सिद्धम् ॥

४. प्राणश्रैष्ठ्याधिकरणम् ।

उत्पत्तिचिन्तानन्तरमुत्पत्तिमतः प्राणस्य स्वरूपं चिन्त्यत इति प्रसङ्गसंगत्येदमाह—

**न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥**

तत्र मुख्यः प्राणः किं वायुरेव, उत इन्द्रियव्यापारः, आहोस्वित् वायुविशेष इति संदेहे, 'यः प्राणः स वायुः' इति 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति प्राणभेदाभेदश्रुत्योरुभयोः

५. वायुक्रियाधिकरणम् ।

विरोधे, मुख्यार्थत्वासंभवेन स्तोककल्पनानुरोधात् भेदश्रुतेर्गौणत्वे वायुरेव प्राण इत्येकः पूर्वः पक्षः। भेदश्रुत्यवष्टम्भेऽपि धर्मिभेदाद्धर्मभेदो लघीयानिति न्यायेन तु सर्वेन्द्रियव्यापार एव प्राण इत्यपरः पूर्वः पक्षः । सिद्धान्तस्तु— न वायुक्रिये मुख्यप्राणो न वायुः, नापि क्रिया इन्द्रियव्यापारः; किं तु वायुविशेष एव । कुतः, 'सवायुना ज्योतिषा' इति पृथगुपदेशात्, तथा 'एतस्माज्जायते प्राणः' इत्यादिना करणेभ्यः पृथगुपदेशात्। न हि इन्द्रियव्यापारस्यैव सत इन्द्रियेभ्यः पृथगुपदेशो युज्यते। तस्माद्वायुविशेषोऽयमध्यात्मभावापन्नः पञ्चवृत्तिः प्राणः । ततश्च न श्रुत्योर्विरोध इति सिद्धम् ॥

इन्द्रियव्यापारः प्राणो न चेत्, तर्हि तस्येन्द्रियवत् करणत्वानङ्गीकारात् जीववत् स्वातन्त्र्यं स्यादित्यत आह—

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥

तुः उक्तशङ्कानिरासार्थः । न जीववत्प्राणः स्वतन्त्रः, किंतु चक्षुरादिवत् जीवं प्रति करणभूतः । कुतः, तत्सहशिष्ट्यादिभ्यः तैः चक्षुरादिभिः सह प्राणसंवादादिषु प्राणस्य शिष्टेः शासनात्, सजातीयानामेव सहशासनस्य युक्तत्वात्। अचेतनत्वभौतिकत्वादिहेतुसंग्रह आदिशब्दार्थः ॥

ननु प्राणस्य जीवोपकरणत्वं चेत्, तर्हि विषयान्तरं स्वरूपान्तरवत् प्रसज्येतेत्यत आह—

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ ११ ॥

अकरणत्वान्न प्राणस्य विषयान्तरापेक्षा दोषः, इन्द्रियान्तरेष्वसंभावितासाधारणदेहादिधारणाख्यव्यापारस्य निर्वाहकत्वात्। तथाहि, प्राणस्यासाधारणो व्यापारः 'तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति श्रुतिर्दर्शयतीत्यर्थः ॥

न केवलं देहधारणमेवास्यासाधारणम्, अपि त्वन्यदपीत्याह—

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

यथा मनः अनेकवृत्त्याख्यासाधारणव्यापारापेक्षया अनेकधा व्यपदिश्यते, एवमुच्छ्वासनिश्वाससर्वशरीरक्रियोत्क्रान्त्याख्याश्चत्वारो व्यापाराः, भक्षितान्नादिरसानां समत्वेन सर्वाङ्गेषु नयनं पञ्चमो व्यापारः। तानपेक्ष्य पञ्चवृत्तिः प्राणो व्यपदिश्यते क्रमेण प्राणोऽपानो व्यान उदानः समान इति। तदसाधारणव्यापारापेक्षया जीवोपकरणत्वं मनोवदिति सिद्धम् ॥

इत्थं मुख्यप्राणस्योत्पत्तिं स्वरूपं चाभिधाय, परिमाणमतिदेशेनाह—

## अणुश्च ॥ १३ ॥

प्राणस्यान्तरङ्गस्वरूपकथनानन्तरं बहिरङ्गपरिमाणमतिदिश्यत इति अन्तरङ्गबहिरङ्गलक्षणा संगतिः पूर्वेणास्य बोध्या ।

६ श्रेष्ठाणुत्वाधिकरणम् ।

उत्क्रान्त्यादिश्रुतेः 'सम एभिस्त्रिभिर्लोकैः' इत्यादिप्राणविभुत्वश्रुतेश्च मिथो विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— चक्षुरादिवत् प्राणोऽप्यणुः परिच्छिन्नः सूक्ष्मश्च । 'सम एभिः' इति श्रुतिः सकलवायुपरा, न आध्यात्मिकप्राणमात्रपरेत्यनयोर्न विरोध इति सिद्धम् ॥

प्राणस्याध्यात्माधिदैवतविभागेन अणुत्वविभुत्वनिरूपणप्रसङ्गेनाध्यात्मिकानामिन्द्रियाणामाधिदैविकाद्यधिष्ठितानां चेष्टामाचष्ट इति प्रसङ्गसंगत्येदमाह—

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

अत्र 'आदित्यश्चक्षुर्भूत्वा' इत्यादीन्द्रियाणां देवताधीनचेष्टावत्त्वश्रुतेः 'चक्षुषा हि रूपाणि पश्यति' इति श्रुत्या विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— ज्योतिरादिभिः आदित्यादिदेवताभिः अधिष्ठीयते प्रेर्यते इत्यधिष्ठानम् अधिष्ठितमेव

७ ज्योतिराद्यधिकरणम् ।

वागादिकं चेष्टते । कुतः, तदामननात् तस्य देवताधिष्ठितत्वस्य 'आदित्यश्चक्षुः' इत्यादिश्रुत्याभिधानात् । 'चक्षुषा हि' इति श्रुतौ तु देवताधिष्ठितत्वानिषेधात् न तयैतस्या विरोध इति सिद्धम् ॥

ननु देवतानामेवाधिष्ठातृत्वं चेत्, तर्हि भोक्तृत्वं प्रसज्येतेत्यत आह—

**प्राणवता शब्दात् ॥ १५ ॥**

प्राणवता जीवेनैव इन्द्रियाणां स्वस्वामिभावः संबन्धः । ततश्च इन्द्रियसाध्यभोगभाक्त्वं जीवस्यैव, न देवतानाम् । कुतः, शब्दात्, 'स चाक्षुषः पुरुषो दर्शनाय चक्षुः' इत्यादिश्रुतेः इत्यर्थः ॥

किं च—

**तस्य च नित्यत्वात् ॥ १६ ॥**

तस्य जीवस्य स्वकर्मार्जिते कार्ये कर्तृत्वेन भोक्तृत्वेन च नित्यत्वात्, न देवतानां भोक्तृत्वमस्मिन् शरीरे इत्यविरोध इति सिद्धम् ॥

ननु सत्सु इन्द्रियेषु तदधिष्ठातृदेवताचिन्ता; तान्येव प्राणव्यापारव्यतिरेकेण न सन्तीत्याक्षेपसंगत्येदमाह—

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥

८. इन्द्रियाधिकरणम्।

अत्र 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' इति मुख्यप्राणादिन्द्रियाणां तत्त्वान्तरत्वश्रुतेः 'त एतस्यैव सर्वे रूपमभवन्' इति प्राणात्मकत्वश्रुत्या विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— श्रेष्ठात् मुख्यप्राणात् अन्यत्र अन्ये ते प्रकृता वागादयः इन्द्रियाणीत्युच्यन्ते, न प्राणाः। कुतः, 'एतस्माज्जायते' इत्यादौ तस्य भेदस्य व्यपदेशात् इन्द्रियाणां प्राणात्मकत्वश्रुतेर्गौणत्वेन न तया विरोधः ॥

किं च—

## भेदश्रुतेः ॥ १८ ॥

वागादीन्द्रियप्रकरणमुपसंहृत्य 'अथ हेममासन्यं प्राणमूचुः' इति भिन्नप्रकरणे प्राणस्येन्द्रियेभ्यो भेदेन श्रवणात् न प्राणव्यापारत्वमिन्द्रियाणाम्, तत्त्वान्तरत्वमित्यर्थः ॥

· किं च—

## वैलक्षण्याच्च ॥ १९ ॥

सुषुप्त्यवस्थायां प्राणस्य स्थितिः नेन्द्रियाणामित्यादिबहुवैलक्षण्यात् तत्त्वान्तरत्वम्। तस्मान्नानयोर्विरोध इति सिद्धम् ॥

पूर्वं नामरूपभेदेन प्राणेन्द्रिययोर्भेद इत्युक्तम् । तत्प्रसङ्गेन नामरूपव्याकरणं किंकर्तृकमिति विचार्यते इति प्रसङ्ग-संगत्येदमाह—

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥

९. संज्ञामूर्तिक्लृप्त्यधिकरणम् ।

उत्पद्यमानव्यापाररूपोत्पत्तिविषयश्रुतिविप्रतिषेधपरिहारानन्तरम् उत्पादकव्यापाररूपोत्पादनविषयश्रुतिविप्रतिषेधः परिह्रियते । तत्र अत्रिवृत्कृतभूतानामुत्पादनं पारमेश्वरमेव; त्रिवृत्कृतभौतिकोत्पादने तु श्रुतिविप्रतिपत्तिः दृश्यते । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति जीवकर्तृकत्वश्रुतेः 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता' इति परमेश्वरकर्तृकत्वश्रुतेश्च मिथो विरोधोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु—सौत्रतुशब्दः पूर्वपक्षनिरासार्थः। 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणि' इति त्रिवृत्कुर्वतः परमेश्वरस्यैव संज्ञामूर्तिक्लृप्तिः नामरूपव्याक्रिया भवितुमर्हति । कस्मात्, 'सेयं देवता' इत्युपक्रम्य 'व्याकरवाणि' इति व्याकरणस्य परदेवताकर्तृकत्वोपदेशात्। न च 'अनेन जीवेन' इति विशेषणात् जीवकर्तृकत्वम्, अल्पमेधसो जीवस्य महीमहीधर-

महोदधिव्याकरणे सामर्थ्याभावात् 'अनेन जीवेन' इत्यस्य सन्निहितानुप्रविश्येत्यनेन संबन्धाच्च नानयोर्विरोध इति ॥

इत्थं बाह्यं त्रिवृत्करणमभिधाय आध्यात्मिकं परं त्रिवृत्करणमभिधातुमाह—

**मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥**

भूमेरन्नात्मिकायाः त्रिवृत्कृतायाः कार्यं भौमं मांसादि । आदिशब्देन पुरीषमनसी गृह्येते । तदाह श्रुतिः—'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' इति । एवम् इतरयोः अप्तेजसोः यथाशब्दं कार्यमवगन्तव्यम्—मूत्रं लोहितं प्राणश्चापां कार्यम्, अस्थि मज्जा वाक् तेजस इति ॥

ननु सर्वेषां त्रिवृत्करणाविशेषात् इयं पृथिवी इमा आपः इदं तेजः, इत्यसाधारणः पृथग्व्यवहारः कथं संगच्छते, कथं वाध्यात्मिकव्यवहारः— इदं मांसादि पृथिवीकार्यम् इदं जलस्य इदं तेजस इति; तत्राह—

**वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥**

तुशब्दः शङ्कानिरासार्थः । सर्वेषां पृथिव्यादीनां त्रिवृत्करणाविशेषेऽपि, वैशेष्यात् स्वभागाधिक्यात्, तद्वादः पृथिव्या-

दिवादः संगच्छते । तद्वाद इति पदाभ्यासः अध्यायपरिसमाप्त्यर्थः । तदेवं सर्वासां श्रुतीनामविरोधे प्रामाण्यात् निरवद्याद्वितीये ब्रह्मणि सिद्धः समन्वय इत्यतिशोभनम् ॥

**मिथस्त्रय्यन्तवाक्यानामविरोधे प्रमात्वतः ।**
**सिद्धः समन्वयो यस्मिंस्तदस्मि ब्रह्म चिद्घनम् ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्ज-
सेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां
श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
द्वितीयोऽध्यायः ॥



ॐ

# तृतीयोऽध्यायः ॥



पूर्वस्मिन्नध्याये ब्रह्मणि समन्वयस्य स्मृतिन्यायश्रुतिविरोधव्यासेधेनानध्यवसायलक्षणाप्रामाण्यप्रतिक्षेपे तार्तीयविचारो भवतीति हेतुहेतुमद्भावसंगत्यायमध्याय आरभ्यते। पूर्वं जीवोपकरणभूतभौतिकजन्म निरूपितम्। तदुपजीव्य तदुपहितस्य जीवस्य संसारप्रकारं वैराग्यार्थं निरूपयितुं देहान्तरारम्भे भूतसूक्ष्मसंपरिष्वक्तस्यैव परलोकगमनमित्याह—

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥**

अत्र पूर्वपक्षे निराधारप्राणादिगमनासंभवान्न वैराग्यम्, सिद्धान्ते तत्संभवाद्वैराग्यमिति फलभेदः। स जीवः किं देहान्तरारम्भकैः अपञ्चीकृतभूतभागैरसंपरिष्वक्तो गच्छति, उत संपरिष्वक्त इति संदेहे, मानाभावात् असंपरिष्वक्त इति पूर्वः पक्षः। सिद्धान्तस्तु— तदन्तरप्रतिपत्तौ देहान्तर-

१. तदन्तर-प्रतिपत्त्यधिकरणम्।

प्रतिपत्तौ तदारम्भकभूतैः संपरिष्वक्तः रंहति गच्छति। कुतः, प्रश्ननिरूपणाभ्याम् 'वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति प्रश्नः, द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति निरूपणं प्रतिवचनम्, ताभ्यामित्यर्थः ॥

नन्वेवमद्भिः संपरिष्वक्तो गच्छतीति गम्यते, कथं तदितरभूतपरिष्वङ्गसिद्धिः ; तत्राह—

**त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥**

त्रिवृत्करणश्रुत्या अपामितरभूतद्वयमेलनेन त्र्यात्मकत्वात्। कथं तर्हि श्रुतावप्शब्दः भूयस्त्वात् तेजआद्यपेक्षया अपां देहे भूयस्त्वादित्यर्थः ॥

**प्राणगतेश्च ॥ ३ ॥**

प्राणानाम् 'तमुत्क्रामन्तम्' इत्यादिना भूताश्रितानामेव गतेः श्रवणात् तत्संपरिष्वङ्गसिद्धिः ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

'मृतस्याग्निं वागप्येति वातं प्राणः' इत्यादिना अग्न्यादिषु गतिश्रुतेः लयश्रवणात् न जीवेन वागादयो गच्छन्तीति चेत्,

न । वागादिलयश्रुतेः 'ओषधीर्लोमानि...' इतिवत् भाक्तत्वादित्यर्थः ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

द्युलोकादिपञ्चाग्निषु प्रथमे द्युलोकाग्नौ 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति' इति श्रद्धाया आहुतित्वश्रवणात् अपामश्रवणात् कथं पुरुषवचस्त्वमिति चेत्, न । हि यतः 'आपो ह्यस्मै श्रद्धां संनमन्ते....' इति श्रद्धाशब्देन तद्धेतवस्ता एवापो लक्ष्यन्ते। अतः प्रश्ननिरूपणयोरुपपत्तेरित्यर्थः ॥

## अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

श्रद्धाशब्दितानामपां पुरुषवचस्त्वेऽपि तद्वेष्टितत्वं जीवस्य न युज्यते, अबादिवज्जीवस्याश्रुतत्वादिति चेत्, न । कुतः, 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इत्यादिवाक्यशेषेण इष्टापूर्तकर्मकारिणां प्रतीतेरित्यर्थः ॥

ननु इष्टादिकारिणां धूमादिमार्गेण चन्द्रलोकं गतानाम् 'तद्देवानामन्नं तं देवा भक्षयन्ति' इति देवैर्भक्ष्यत्वं श्रूयते । अतः कथं तेषां स्वकर्मफलोपभोगसिद्धिरित्यत आह—

## भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥

वाशब्दः चोदितदोषनिरासार्थः । तेषाम् इष्टादिकारिणाम् अन्नत्वं भाक्तमेव, न मुख्यम् ; अन्यथा 'स्वर्गकामो यजेत' इति-श्रुतिव्याकोपः स्यात् । अतः तेषामनात्मवित्त्वात् देवोपभोग्य-त्वमेवान्नत्वम् । तथाहि दर्शयति ' अथ योऽन्यां देवतामुपास्ते ' इत्यादिश्रुतिरित्यर्थः । तस्मात्परलोकभोगार्थं भूतसंपरिष्व-क्तस्य रंहणमिति सिद्धम् ॥

पूर्वं कर्मसमवेतानामपां पञ्चमाहुतौ पुरुषात्मना परिणाम-श्रवणं हेतुमाश्रित्य अबादिभूतपरिवेष्टितस्य जीवस्य रंहणमुक्तम्, तदयुक्तम् ; स्वर्गादवरोहतां जीवानां कर्माभावेन तत्समवेता-नामपामप्यभावादित्याक्षेपसंगत्येदमाह—

## कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

अत्र पूर्वपक्षे अवरोहतां कर्माभावेन तदनुगुणतिर्यगादि-योनिप्राप्त्ययोगान्न कर्मफलेषु वैराग्यम्, सिद्धान्ते कर्मणः सत्त्वाद्वैराग्यमिति फलभेदः । एवं हि स्वर्गिणामवरोहणं श्रूयते— ' तस्मिन्याव-

२. कृतात्ययाधिकरणम् ।

त्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इत्यादि । तत्र किं स्वर्गादवरोहन्तः सानुशयाः, उत निरनुशया इति संदेहे, निरनुशया इति पूर्वः पक्षः । सिद्धान्तस्तु— कृतस्य स्वर्गप्रापककर्मजातस्य भोगेन अत्यये नाशे अनुशयवान् अनुशयशब्देनामुष्मिकफलप्रापककर्मातिरिक्तं कर्मोच्यते तद्वानेवावरोहति । कुतः, दृष्टस्मृतिभ्याम् 'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्...' इत्याद्या दृष्टा प्रत्यक्षा श्रुतिः, 'प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशकालकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति स्मृतिः, ताभ्यामनुशयवन्त एवावरोहन्तीति गम्यते । ते च येन मार्गेण चन्द्रलोकमारूढाः तेनैवावरोहन्ति किं तद्विपरीतेनेत्याकाङ्क्षायामाह— यथेतमनेवं च । यथेतं यथागतं धूमादिमार्गेण अनेवं च तद्विपर्ययेण वक्ष्यमाणाभ्रादिमार्गेणावरोहन्तीत्यर्थः ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥

ननु 'रमणीयचरणाः' इति श्रुतिः चरणाद्योन्यापत्तिं दर्शयति, नानुशयात् । अन्यच्चरणमन्योऽनुशय इति नानुशयसिद्धिरिति चेत्, न । यतः कार्ष्णाजिनिराचार्य इयं चरणश्रुतिरनुशयोपलक्षणार्थेति मन्यते ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥

ननु चरणश्रुतेर्मुख्याचारार्थपरित्यागेन अनुशयार्थकत्वे आनर्थक्यमिति चेत्, न। इष्टादिकर्मणामाचारनिर्वर्त्यत्वेन चरणापेक्षत्वात् चरणश्रुतेरर्थवत्त्वमित्यर्थः ॥

वस्तुतः कर्मचरणयोर्न भेद इत्याह—

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देनोच्येते इति मन्यते, लोके इष्टादिकारिणि 'धर्मं चरति' इति कर्मचरणयोरभेदेन प्रयोगदर्शनात्। अतः इष्टादिकारिणां चन्द्रलोकं गतानां पुनरवरोहार्थमनुशयोऽस्तीति सिद्धम् ॥

पूर्वम् इष्टादिकारिण एव चन्द्रलोकं गच्छन्तीत्युक्तम्, तदयुक्तम्; अनिष्टादिकारिणोऽपि गच्छन्त्वित्याक्षेपसंगत्येदमाह—

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

३. अनिष्टादिकार्याधिकरणम्।

अत्र पूर्वपक्षेऽनिष्टादिकारिणामविशेषेण चन्द्रलोकगतेरिष्टादिकरणं व्यर्थम्, सिद्धान्ते पापिनां चन्द्रलोकगत्यभावात् तदर्थमिष्टादिकरणं सार्थकमिति फलभेदः। अत्र पापिनां चन्द्रलोकगतिरस्ति

न वेति संदेहे, पूर्वः पक्षः—अनिष्टादिकारिणामपि चन्द्रलोकगमनम् 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' इति श्रुतम्। अतो धर्मिण एव चन्द्रलोकं गच्छन्तीत्येतदसंगतमित्यर्थः ॥

एवं पूर्वपक्षे सिद्धान्तः—

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥**

तुशब्दः पूर्वपक्षनिरासार्थः । संयमने यमालये स्वपापानुरूपा यामीर्यातना अनुभूय पुनरिमं लोकं प्रत्यवरोहन्ति इत्येवंभूतावेव तेषां पापिनामारोहावरोहौ भवतः । कुतः, तद्गतिदर्शनात् 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' इति श्रुतौ यमवशत्वलक्षणतद्गतेर्दर्शनादित्यर्थः ॥

**स्मरन्ति च ॥ १४ ॥**

मन्वादयः शिष्टाः पापिनां नरकभोगं स्मरन्ति । अतश्च धर्मिणामेव चन्द्रलोकगमनं नान्येषामित्यर्थः ॥

**अपि च सप्त ॥ १५ ॥**

अपि च सप्त रौरवादयो नरकाः पापफलभूमित्वेन स्मर्यन्ते पौराणिकैः; तान् पापिनः प्राप्नुवन्ति, न चन्द्रलोकमित्यर्थः ॥

ननु पापिनो यामीर्यातना अनुभवन्तीति यदुक्तम्, तदसंगतम्; रौरवादौ चित्रगुप्तादीनामधिष्ठातृत्वस्मरणादित्यत आह—

**तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥**

तत्रापि च रौरवादिषु तस्यैव यमस्याधिष्ठातृत्वव्यापारादविरोधः, चित्रगुप्तादीनां यमप्रयुक्तत्वादिति भावः ॥

उपासकानामर्चिरादिमार्गः, केवलकर्मिणां धूमादिमार्ग इति श्रुतिस्मृत्यादिषु व्यवस्था । तथा च एतन्मार्गद्वयभ्रष्टानां पापिनां तृतीयमार्गोक्तेरपि न तेषां चन्द्रलोकप्राप्तिरित्याह—

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥**

'अथैतयो पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति....' इत्यादौ एतयोरिति पदस्यार्थः सूत्रे विद्याकर्मणोरितीति । कुतः, विद्याकर्मणोरेव देवयानपितृयानात्मकमार्गद्वयसाधनत्वेन प्रकृतत्वात्, प्रकृतवाचकत्वमेतच्छब्दस्य युक्तमित्यर्थः। सूत्रे तुशब्देन 'चन्द्रमसमेव ते सर्वे

गच्छन्ति' इति श्रुतिप्रयुक्तशङ्कानिरासः । कुतः, सर्वशब्दस्य पुण्यपुरुषमात्रपरत्वादिति भावः ॥

ननु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति संख्यानियमेन देहप्राप्त्यभिधानात्तदर्थं पापिनां चन्द्रलोकगमनमङ्गीकर्तव्यमित्यत आह—

**न तृतीये तथोपलब्धेः ॥ १८ ॥**

तृतीये मार्गे प्रविष्टानां पापिनां देहप्राप्त्यर्थमाहुतिसंख्यानियमो नादर्तव्यः । कुतः, तथोपलब्धेः संख्यानियमं विनैव 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इति श्रुतौ तृतीये मार्गे देहप्राप्तेरुपलब्धेरित्यर्थः । इष्टादिकारिणामेवायं संख्यानियम इति भावः ॥

**स्मर्यतेऽपि च लोके ॥ १९ ॥**

अपि च लोके भारतादौ द्रोणधृष्टद्युम्नादीनामयोनिजत्वं स्मर्यते । तत्र द्रोणादीनां योषिदाहुतिरेका नास्ति, धृष्टद्युम्नादीनां योषित्पुरुषविषये द्वे आहुती न स्तः इत्याहुतिसंख्यानियमो नास्ति ; एवमन्यत्रापीति भावः ॥

**दर्शनाच्च ॥ २० ॥**

किं च लोके जरायुजाण्डजस्वेदजोद्भिज्जेषु चतुर्विधदेहेषु

स्वेदजोद्भिज्जयोः स्त्रीपुंव्यक्तिसंयोगं विनैवोत्पत्तिदर्शनान्नाहुति-संख्यानियम इत्यर्थः ॥

ननु 'त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जम्' इति शरीरत्रैविध्यश्रवणात् कथं चातुर्विध्यमित्यत आह—

**तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥**

श्रुतौ 'आण्डजं जीवजमुद्भिज्जम्' इत्यत्र तृतीयशब्देनोद्भिज्जशब्देनावरोधः संग्रहः संशोकजस्य स्वेदजस्य। वृक्षादिकं पृथिवीमुद्भिद्य जायते, स्वेदजं तु जलमुद्भिद्येत्युभयोरवयवार्थत्वाविशेषात्तेनास्य संग्रहः कृतः। न ह्येतावता चातुर्विध्यहानिर्भवति, स्थावरजङ्गमात्मकत्वेनोभयोर्भेदस्य दुरपह्नवत्वात्। अतः अनिष्टादिकारिणां न चन्द्रलोकप्राप्तिः, अपि तु इष्टादिकारिणामेवेति सिद्धम् ॥

पूर्वं तृतीयं स्थानमिति स्थानशब्दस्य मार्गद्वयोपक्रमसामर्थ्यात् तृतीयमार्गोपलक्षकत्वमुक्तम्। न तथेह भवति श्रुतेः सादृश्यलक्षकत्वम्, तत्र मानाभावादिति प्रत्युदाहरणसंगत्येदमाह—

**तत्साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥**

अत्र पूर्वपक्षे भवति श्रुतेर्मुख्यत्वासिद्धिः, सिद्धान्ते गौण-

त्वासिद्धिरिति फलभेदः । पूर्वमिष्टादिकारिणोऽवरोहन्तीत्युक्तम्;

४. साभाव्यापत्त्यधिकरणम् ।

अत्र तेषामवरोहप्रकारश्चिन्त्यते । श्रूयते ह्यवरोहश्रुतिः— 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति । तत्र किं स्वर्गादवरोहन्तो जीवा आकाशादिस्वरूपं प्रतिपद्यन्ते, उत तत्साम्यमिति विशये, आकाशादिस्वरूपमिति पूर्वः पक्षः । सिद्धान्तस्तु— जीवानां तैः आकाशादिभिः साभाव्यापत्तिः समानो भावो रूपं येषां ते सभावाः तद्भावः साभाव्यं सादृश्यं तस्यापत्तिः प्राप्तिः । कुतः, उपपत्तेः चन्द्रलोकं गतानामनुशयिनां प्रवृत्तफलकर्मक्षयदर्शनजनितशोकाग्निना दह्यमानमिदं शरीरं करकादिवद्विलीयमानमाकाशसमं भवतीत्येतदुपपद्यते । न ह्यन्यस्यान्यभावो मुख्य उपपद्यते । तस्मात्सादृश्यमेव प्रतिपद्यन्त इति सिद्धम् ॥

इत्थं पूर्वमाकाशादिषु वर्षान्तेषु पूर्वपूर्वसादृश्यानन्तरमुत्तरोत्तरसादृश्यमित्युक्तम्, तदुपजीव्यान्यद्विचार्यत इति उपजीव्योपजीवकभावसंगत्येदमाह—

**नातिचिरेण विशेषात् ॥ २३ ॥**

अत्र पूर्वपक्षे अधिकारिणः सर्वत्र तत्सादृश्यपरिहारार्थं

कर्तव्यस्य प्रयत्नस्य गौरवम्, सिद्धान्ते तदर्थं कर्तव्यप्रयत्नस्य क्वचिल्लाघवं क्वचिद्गौरवमिति फलभेदः। तत्र किं जीवः चिर-कालमेव सादृश्येनावस्थाय अपरसादृश्यं गच्छति, उताल्पमल्पमिति विशये, नियामकाभावात् अनियम इति पूर्वः पक्षः। सिद्धान्तस्तु— जीवो नातिचिरेण अल्पमल्पं कालमेवाकाशादिवर्षान्तैः सादृश्येनावस्थाय वर्षधाराद्वारा पृथिवीं प्रविशति। कुतः, व्रीह्यादिभावापत्त्यनन्तरं 'अतो वै खलु दुर्निष्प्रपतरम्' इति विशेषात् ततः पूर्वं सुनिष्प्रपततरत्वं प्रतीयते। तत्र व्रीह्याकाशादौ जीवस्य प्रतीयमाने सुखदुःखे चिरकालावस्थानाल्पकालावस्थाने भवतः, न मुख्ये; तदानीं विना स्थूलशरीरं लिङ्गशरीरमात्रेण सुखदुःखोपभोगासंभवात्। अतो व्रीह्यादिप्रवेशात् पूर्वमल्पमल्पमेव कालं तत्सादृश्येनावस्थानमिति सिद्धम्॥

५. नातिचिराधिकरणम्।

पूर्वं दुर्निष्प्रपतरशब्दस्य चिरकालावस्थानलक्षकत्वेऽपि प्रकृते व्रीह्यादिभावेन 'जायन्ते' इति जीवजन्मश्रुतेः मुख्यत्वसंभव इति प्रत्युदाहरणसंगत्येदमाह—

## अन्याधिष्ठितेषु पूर्ववदभिलापात्॥ २४॥

अत्र पूर्वपक्षे व्रीह्यादिजन्मनो मुख्यत्वेऽनुशयिनां तत्परिहारायाधिकारिणाधिकं प्रयतितव्यम्, सिद्धान्ते तदीय-

६. अन्याधिष्ठिताधिकरणम् । संसर्गमात्रं निराकर्तुं नाधिकं प्रयतितव्यम् इति फलभेदः । तस्मिन्नेवावरोहे 'त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते' इति श्रूयते । तत्र किं व्रीह्यादिभावेन जीवानां जनिश्रुतिः मुख्या, उत जीवान्तरेणाधिष्ठिते व्रीह्यादौ संसर्गमात्रमिति विशये, मुख्येति पूर्वः पक्षः । सिद्धान्तस्तु— अन्यैर्जीवैरधिष्ठिते व्रीह्यादौ संसर्गमात्रमनुशयिनां भवति । कुतः, पूर्ववदभिलापात् यथाकाशादिवर्षान्तेषु कर्मपरामर्शमन्तरेणैव प्रवेश उक्तः ; एवं व्रीह्यादिष्वपि कर्मपरामर्शं विनैव प्रवेशाभिलापात् । अतः कर्मपरामर्शाभावात् न व्रीह्यादिषु अनुशयिनां सुखदुःखभोक्तृत्वम् । यत्र तु तद्भोक्तृत्वं तत्र कर्मपरामर्शः 'रमणीयचरणाः' इत्यादिना दृश्यते । तस्माज्जनिश्रुतिः संसर्गमात्राभिप्राया, न मुख्या इति सिद्धम् ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

ननु ज्योतिष्टोमादिकं कर्म पशुहिंसादियोगादशुद्धम् ; तत्कारिणामनुशयिनां व्रीह्यादिस्थावरेषु दुःखानुभवार्थं मुख्यमेव जन्मास्त्विति चेत्, न ; शब्दात् विधिशास्त्रात् अग्निष्टोमादेर्धर्मत्वेनावगतत्वात् न दुःखहेतुत्वमित्यर्थः ॥

किं च—

**रेतःसिग्योगोऽथ ॥ २६ ॥**

अथ व्रीह्यादिभावानन्तरम् अनुशयिनां 'रेतः सिञ्चति' इति रेतःसिक्, तद्योगः तद्भावः 'यो रेतः सिञ्चति तद्भूय एव भवति' इति श्रुतावाम्नायते। न ह्यत्रानुशयिनां रेतःसिग्भावो मुख्यः संभवति, इदानीं पुरुषं प्रविष्टत्वेन अप्राप्तयौवनत्वात्। अतः तद्भावः तत्संसर्गो वाच्यः। तथा व्रीह्यादावपि संसर्ग एव, आकाशादावपि संसर्गस्यैवावगतत्वेन संदंशन्यायादिति भावः ॥

ननु अनुशयिनां सर्वत्र संसर्गस्यैवाङ्गीकारे मुख्यं जन्म क्वापि न स्यादित्यत आह—

**योनेः शरीरम् ॥ २७ ॥**

योनौ रेतसि निषिक्ते ततः सुखदुःखोपभोगयोग्यं कर्मोपार्जितं शरीरम् अनुशयिनां जायत इति 'रमणीयचरणाः' इत्यादिशास्त्रमाह। तस्मात् ब्राह्मणादियोनावेव अनुशयिनां मुख्यं जन्म न व्रीह्यादाविति गत्यागतिविवेककृतं वैराग्यं ज्ञानसाधनमित्यनवद्यम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां तृतीयाध्यायस्य

प्रथमः पादः ॥

ॐ

## द्वितीयः पादः ॥

---

इत्थं गत्यागतिनिरूपणेन कर्मफलेभ्यो विरक्तस्य महावाक्यार्थज्ञानाय तत्त्वंपदार्थावस्मिन्पादे शोध्येते इति हेतुहेतुमद्भावसंगत्या द्वितीयः पाद आरभ्यते। तत्र पूर्वं गत्यागतिचिन्तया जाग्रदवस्था निरूपिता; तदनन्तरं त्वंपदार्थस्य स्वयंज्योतिष्ट्वसिद्धये स्वप्नावस्थां निरूपयितुमिदमाह—

**संध्ये सृष्टिराह हि ॥ १ ॥**

पादान्तरत्वादव्यवहिताधिकरणेनास्य न संगत्यपेक्षा। अत्र पूर्वपक्षे व्यावहारिकस्वप्नावस्थातो जीवस्य पृथक्करणा-

१. संध्याधिकरणम्।

योगात् स्वयंज्योतिष्ट्वासिद्धिः, सिद्धान्ते तद्योगात्तत्सिद्धिरिति फलभेदः। एवं हि स्वप्नमधिकृत्य श्रूयते— 'अथ रथान्रथयोगान्पथः सृजते' इति। तत्र किं स्वप्नसृष्टिः व्यावहारिकी, उत मायामात्रमिति संदेहे, पूर्वः पक्षः— संध्ये जाग्रत्सुषुप्त्योः संधौ भवे स्वप्ने सृष्टिः व्यावहारिक्येव, हि यस्मात् 'अथ रथान्....' इत्यादिका श्रुतिरेवमाह ॥

किं च—

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

एके शाखिनो जीववत्तथा अस्मिन्नेव स्वप्ने कामानां निर्मातारमीश्वरमामनन्ति 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति। पुत्रादयश्च तत्र कामा अभिधीयन्ते काम्यन्त इति। एवं च स्वप्नसृष्टिः व्यावहारिकी, ईश्वरकर्तृकत्वात् क्षित्यादिवत्— इत्यनुमानमनेन सूत्रेण सूचितम्। तस्मात् पूर्वोदाहृतश्रुत्या एतदनुमानेन च स्वप्नसृष्टिः व्यावहारिकीति सिद्धम् ॥

एवं पूर्वपक्षे सिद्धान्तः—

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

तुः पूर्वपक्षनिरासार्थः। स्वप्नसृष्टिः शुक्तिरूप्यवन्मायामात्रम्। कुतः, कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् न हि कार्त्स्न्येन देशकालादिसंपत्त्यबाधरूपपरमार्थवस्तुधर्मेण अभिव्यक्तस्वरूपः स्वप्नः। अतः तादृशधर्मेणानभिव्यक्तस्वरूपत्वात् प्रातिभासिक एव स्वप्नः। यदुक्तम् 'अथ रथान्रथयोगान्पथः सृजते' इति, तच्च 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्येवमादिकया श्रुत्यैव परिहृतम्। यच्चानुमानमुक्तम्, तत्रोचि-

तद्देशकालादिजन्यत्वमुपाधिः हेत्वसिद्धिश्च 'स्वयं विहत्य स्वयं निर्माय....' इत्यादिना श्रुत्यन्तरेण स्वप्नसृष्टेः जीवकर्तृकत्व श्रवणात् । अतः स्वप्नसृष्टिर्मिथ्येति सिद्धम् ॥

ननु स्वप्नस्य मिथ्यात्वे तत्सूचितोऽप्यर्थः सत्यो न स्यादित्याशङ्क्याह—

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥**

स्वप्ने जायमानः स्त्रीदर्शनादिः सत्य एव, स च सत्यस्य साध्वसाधुवस्तुनः सूचको हेतुः । तथा हि— 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्' इत्यादिश्रुतेरवगम्यते । आचक्षते च स्वप्नाध्यायविदः शुभाशुभसूचकत्वं स्वप्नदर्शनस्य । वस्तुतस्तु दर्शनस्य स्त्र्याद्यर्थरूषितत्वेन असत्यत्वेऽपि शुक्तिरूप्यज्ञानस्य सत्यहर्षादिजनकत्ववत् सत्यशुभादिसूचकत्वमविरुद्धम् इति भावः ॥

ननु पूर्वमुचितदेशादिनिमित्ताभावात् स्वप्नो मायेत्युक्तम् अयुक्तम्, ऐश्वर्ययोगात् संकल्पमात्रेणापि सत्यसृष्टेः संभवादित्याशङ्क्याह—

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥**

अस्य जीवस्य तिरोहितमैश्वर्यं परस्येश्वरस्य अभिध्यानात् आभिमुख्येन ध्यानात् अभिव्यक्तं भवति। कुतः, ततः तस्मात् अज्ञातादीश्वरात् बन्धः, ज्ञाताद्विपर्ययो मोक्षः इति 'ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः। तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः' इतिश्रुतिर्दर्शयति। एवं च जीवेश्वरयोरभेदेऽप्यैश्वर्यस्य तिरोहितत्वात् न जीवस्य संकल्पमात्रेण स्रष्टृत्वमिति भावः॥

ननु जीवस्यैश्वर्यतिरोभावे को हेतुरित्याशङ्क्याह—

**देहयोगाद्वा सोऽपि॥ ६॥**

सोऽपि जीवस्यैश्वर्यतिरोभावः देहयोगात् देहादावात्मत्वाभिमानलक्षणाविद्यावशात्, यथा भस्मयोगाद्वह्नेः प्रकाशनशक्तितिरोभावः तद्वदित्यर्थः। वाशब्दः ईश्वरत्वासंभवशङ्कानिरासार्थः, अभेदस्याम्नायसहस्रप्रसिद्धत्वात्। अतः स्वप्नप्रपञ्चस्य मायामात्रत्वेन ततो विनिर्मुक्तस्य जीवस्य स्वयंज्योतिष्ट्वसिद्धिरिति॥

इत्थं बाह्यकरणोपरमरूपं स्वप्नं जीवस्य स्वयंज्योतिष्ट्वार्थं विचार्य, अन्तःकरणोपरमरूपां सुषुप्तिं प्रतियोग्यनुयोगिभावसंगत्या विचारयति—

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥

२. तदभावाधिकरणम् ।

अत्र पूर्वपक्षे स्थानविकल्पाज्जीवस्य ब्रह्मैक्यानिर्णयः, सिद्धान्ते स्थानसमुच्चयात्तन्निर्णय इति फलभेदः । अत्र सुषुप्तिवाक्यानि विप्रतिपन्नानि दृश्यन्ते; 'आसु तदा नाडीषु सृप्तो भवति' इति सुषुप्तिकाले नाडीप्रवेशः श्रूयते, क्वचित् 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति, क्वचित् 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' इति । तत्र किं जीवस्य नाडीपुरीतत्परमात्मनां मध्ये यत्र क्वचित् सुषुप्तिरिति विकल्पः, उत नाडीपुरीतत्प्रवेशानन्तरं परमात्मन्येवेति समुच्चय इति संशये, एकफलत्वात् व्रीह्यादिवत् विकल्प इति पूर्वः पक्षः । सिद्धान्तस्तु—तदभावः स्वप्नाभावः सुषुप्तिः, नाडीषु आत्मनि च इति नाड्यादीनां समुच्चय एव, न विकल्पः । स च समुच्चयो नाडीपुरीतत्प्रवेशं विना सत्संपत्तेरभावान्नाडीपुरीततोः गुणभूततया परमात्मनः प्राधान्येनावगन्तव्यः । कुतः, तच्छ्रुतेः तस्य नाड्यादीनां सुषुप्तिस्थानत्वस्य श्रुतत्वात्, उक्तसमुच्चयानङ्गीकारे श्रुतीनां संग्रहो न स्यात् इति भावः ॥

किं च—

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

यतः परमात्मैव सुषुप्तिस्थानम्, अत एव हेतोः अस्मात् परमात्मनो जीवस्य प्रबोध उपदिश्यते। 'सत आगम्य न विदुः सत आगच्छामहे' इति सद्रूपात् परमात्मनः सकाशात् जीवा आगच्छन्ति इति श्रवणात् अन्यस्य सुषुप्तिस्थानत्वे इदं श्रवणं बाध्येत, अन्यत्र सुप्तस्यान्यस्मात् समुत्थानायोगादिति भावः। तस्मात्सुषुप्तौ मिथ्याज्ञानाभावमात्रेणैव ब्रह्मसंपत्तेः सत्त्वान्मूलाज्ञाननिवृत्तौ साकल्येन ब्रह्मसंपत्तिरविरुद्धेति। अतो जीवस्य ब्रह्मैक्यमिति सिद्धम्॥

पूर्वं सुषुप्त्यन्ते परमात्मनः सकाशाज्जीवोत्थानश्रुतेः परमात्मैव सुषुप्तिस्थानमित्युक्तमयुक्तम्, सुप्तादन्यस्य प्रबोधसंभवेन सुप्तस्य नाड्यादिस्थानत्वसंभवादित्याक्षेपसंगत्येदमाह—

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः॥ ९॥**

अत्र पूर्वपक्षे सुप्तस्यैवापुनरावृत्तिरूपमुक्तिसिद्धौ ज्ञानवैयर्थ्यम्, सिद्धान्ते त्वज्ञातब्रह्मात्मना स्थितस्याज्ञानबलेन तस्यैवोत्थानावश्यम्भावादज्ञाननाशाय ज्ञानसार्थक्यमिति फलभेदः। तत्र यः सुप्तो जीवः स एव प्रतिबुध्यते, उत स एव अन्यो वेत्यनियम इति संशये, अनियम इति पूर्वः पक्षः। सिद्धान्तस्तु— यः सुप्तो जीवः स एव प्रतिबुध्यते नान्यः। कुतः,

३. कर्मानुस्मृतिशब्दविध्यधिकरणम्।

कर्मानुस्मृतिशब्दविधिभ्यः पञ्चभ्यो हेतुभ्यः। दिनद्वयसाध्यस्य कर्मणोऽर्धं कृत्वा सुप्तः पुनरुत्थायावशिष्टमर्धं करोति । अनु-शब्देन प्रत्यभिज्ञा सूच्यते, योऽहमतीतेऽप्यहनि घटमद्राक्षं स एवैतं घटं स्पृशामीत्याद्याकारा; पश्चात्स घट इत्यादि-स्मरणं स्मृतिशब्देनोच्यते । 'पुनः प्रतिन्यायं प्रतियोन्याद्र-वति बुद्धान्तायैव' इत्यादिश्रुतिसमूहः शब्दशब्देनोच्यते । कर्मविद्याविधयो विधिशब्देनोच्यन्ते । यदि सुप्तस्य पुनर्नो-त्थानम्, तर्हि उक्तहेतवो बाध्येरन् । अतः सुप्त एवोत्तिष्ठ-तीति सिद्धम् ॥

पूर्वं सोऽहमिति प्रत्यभिज्ञानात् सुषुप्तप्रतिबुद्धैक्यमुक्तम । तद्वद्विशेषाभावप्रत्यभिज्ञानात् सुषुप्तिरेव मूर्च्छेति दृष्टान्तसंग-त्येदमाह—

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

अत्र पूर्वपक्षे मूर्च्छातिरेकार्थं न पृथक्प्रयतितव्यम्, सिद्धान्ते पृथक्प्रयतितव्यमिति फलभेदः । अत्र किं मूर्च्छा-

४. मुग्धाधिकरणम् ।

वस्था सुषुप्त्यन्तर्गता, उतातिरिक्तेति संदेहे, सुषुप्त्यन्तर्गतेति पूर्वः पक्षः । सिद्धान्तस्तु— न तावत्स्वप्नजागरिते मूर्च्छावस्था, अत्र ज्ञानाभावात्; नापि मरणावस्था, प्राणोष्मणोः सत्त्वात्; नापि सुषुप्तिः, भयानकव-

दनवत्त्वादिलक्षणभेदात्; किंतु परिशेषात् प्रसक्तस्य प्रतिषेधे अन्यत्राप्रसङ्गाच्छिष्यमाणे वस्तुनि यः संप्रत्ययः स परिशेषः, तस्मात् मुग्धे मुग्धिर्मूर्च्छावस्था तदवस्थापन्ने विशेषज्ञानराहित्यादिना अर्धेन धर्मजातेन मूर्च्छावस्थायाः संपन्नत्वात् अर्धेन कम्पनादिना मरणावस्थाधर्मजातेन च युक्तत्वात् अर्धसंपत्तिः मूर्च्छावस्था सुषुप्तिव्यतिरिक्तैवेत्यनवद्यम् ॥

इत्थं चतुर्भिरधिकरणैः उद्देश्यत्वेन प्रथमं जिज्ञास्यं त्वंपदार्थं स्वप्रकाशचिदेकरसं सर्वावस्थाविनिर्मुक्तं निर्विशेषं संशोध्य, तज्जिज्ञासोपरमानन्तरेऽवसरसंगत्या विधेयत्वेन जिज्ञास्यं तत्पदार्थं शोधयितुं पादशेषमारभमाणो मूर्च्छावस्थायाः विरुद्धसुषुप्तिमरणावस्थोभयधर्मवत्त्ववत् ब्रह्मणोऽप्युभयरूपत्वं भवत्विति दृष्टान्तावान्तरसंगत्येदमाह —

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

अत्र पूर्वपक्षे द्विरूपं ब्रह्म ध्येयम, सिद्धान्ते निर्विशेषमेवेति फलभेदः । अत्र 'सर्वकामः सर्वगन्धः सर्वरसः' इत्यादिना ब्रह्मणः सविशेषत्वं श्रूयते, 'अस्थूलमनणु' इत्यादिना निर्विशेषत्वम् । तत्र किम्, उभयश्रुत्यनुरोधात् उभयरूपं ब्रह्म, उतैकरूपम्; एक-

५. उभयलिङ्गाधिकरणम् ।

रूपमित्यत्रापि सविशेषं निर्विशेषं वेति संदेहे, द्विरूपमिति पूर्वः पक्षः । सिद्धान्तस्तु— न तावत्परस्य ब्रह्मणः उभयलिङ्गम् उभयरूपत्वं संभवति, सत्यस्य वस्तुनो द्वैरूप्यायोगात् ; न ह्येकमेव वस्तु एकदा तद्वत्तदभाववच्च दृष्टम् । एतेन मूर्छावस्थादृष्टान्तो वैलक्षण्यान्निरस्तः । नापि स्थानत उपाधित उभयरूपत्वं तात्त्विकं युक्तम् , अग्निसंयोगमात्रेण जलस्थोष्णस्य तत्स्वभावत्वादर्शनात् । अत एकरूपत्वमेव ब्रह्मणः ; हि यस्मात् सर्वत्र सर्वेषु वेदान्तेषु 'अशब्दमस्पर्शमरूपम्' इत्यादिब्रह्मपरेषु सविशेषत्वनिरासेन निर्विशेषमेवैकरूपं ब्रह्मोपदिश्यत इत्यर्थः ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

ननु न निर्विशेषमेव ब्रह्म । कुतः, भेदात् प्रतिविद्यं ब्रह्मण आकारभेदेन भेदात् ; कस्यांचित् विद्यायां चतुष्पाद्ब्रह्मोपदिश्यते, कस्यांचित् षोडशकलम् , कस्यांचित् त्रैलोक्यशरीरं वैश्वानराख्यम् । तस्मात् सविशेषमपि श्रुतिसामर्थ्यादङ्गीकर्तव्यमिति चेत् , न ; प्रत्येकं प्रत्युपाधि अतद्वचनात् अभेदवचनात् 'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषः' इत्यादिश्रुतौ ब्रह्मणः सर्वोपाधिषु पृथिव्यबादिषु अभेदश्रवणादित्यर्थः ॥

## अपि चैवमेके ॥ १३ ॥

अपि चैके शाखिनः 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' 'नेह नानास्ति किंचन' इत्येवं भेदनिन्दापूर्वकमभेदमेव ब्रह्मणः समामनन्ति इत्यर्थः ॥

ननु सगुणनिर्गुणपरे श्रुतिद्वये सति कथं निर्गुणे ब्रह्मणि पक्षपातः; तत्राह—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

रूपादिहीनं निर्विशेषमेव ब्रह्मावधारयितव्यम्, न सविशेषम्। कुतः, 'अस्थूलम्' इत्यादिनिषेधशास्त्रस्य निर्गुणब्रह्मप्रधानत्वादित्यर्थः। उपासनावाक्यानां सविशेषत्वे तात्पर्याभावात्, तत्तात्पर्याङ्गीकारे वाक्यभेदापत्तेः, इतरेषां सविशेषवाक्यानां प्रत्यक्षादिसिद्धप्रपञ्चानुवादकत्वेन निर्विशेषपरत्वात्, 'तदनन्यत्वम' इत्यादिना प्रपञ्चमिथ्यात्वसाधनाच्च, न सविशेषत्वं ब्रह्मणः प्रामाणिकमिति भावः ॥

ननु तर्हि सविशेषश्रुतीनां का गतिरित्यत आह—

## प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

यथा सूर्यादिप्रकाशो वक्रवंशाद्युपाधिना वक्र इव ऋजुरिव भवति, तद्वत् ब्रह्मापि पृथिव्याद्युपाधिवशात् तत्तदाकारमिव

भवति। तादृशौपाधिकाकारः सविशेषश्रुतीनां गतिरिति तासा-मवैयर्थ्यं निरर्थकत्वाभाव इत्यर्थः ॥

ननु कीदृशं निर्विशेषं ब्रह्मेत्यत आह—

**आह च तन्मात्रम् ॥ १६ ॥**

'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' इति श्रुतिः तन्मात्रं चैतन्यमात्रं स्वप्रकाशं चिदेकरसं निर्विशेषमा-हेत्यर्थः ॥

किं च प्रपञ्चप्रत्याख्यानमुखेन ब्रह्मण उपदेशादपि ब्रह्म निर्विशेषमेव; सविशेषत्वे तद्वाक्यैरेव तत्सिद्धेः प्रत्याख्यानो-पदेशानर्थक्यं स्यादित्याह—

**दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥**

'अथात आदेशो नेति नेति' इत्यादिश्रुतिः प्रपञ्चनिषेध-मुखेनैव ब्रह्म दर्शयति। सौत्राथोशब्दः तथार्थः। तथा स्मर्यते च भगवद्गीतासु निषेधमुखेनैव ब्रह्म 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इति ॥

किं च विशिष्टदृष्टान्तोक्तिरपि निर्विशेषत्वमस्य गमयती-त्याह—

**अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥**

यत एवायमात्मा चैतन्यैकरसः परप्रतिषेधोपदेश्यो निर्विशेषः, अत एवौपाधिकं सविशेषत्वमादाय सूर्यकादिवत् जलगतसूर्यप्रतिबिम्बादिवत् इत्युपमोपादीयते मोक्षशास्त्रेषु 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ।' इत्यादिषु । एवं च एतद्दृष्टान्तबलादपि ब्रह्मणो निर्विशेषत्वमिति सूत्राभिप्रायः ॥

दृष्टान्तवैषम्यं शङ्कते—

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥**

यथा अम्बु सूर्यान्मूर्तात् भिन्नं दूरस्थं मूर्तं गृह्यते, तद्वत् अमूर्तात्सर्वात्मकादात्मनो भिन्नदूरस्थोपाधेरग्रहणात् न तथात्वं न सूर्यतुल्यत्वमिति शङ्कार्थः ॥

अत्रोत्तरमाह—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥**

यथा सूर्यप्रतिबिम्बस्य जलान्तर्भूतस्य जलगतवृद्धिह्रासभाक्त्वं न वास्तवम्, एवं निर्विशेषस्य परमात्मनो देहाद्युपा-

ष्वन्तर्भावाद्देहादिगतवृद्धिह्रासभाक्त्वं न स्वाभाविकम् इत्ये-
तावतांशेनोभयोः दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्याद्भवति सू-
र्यादिदृष्टान्तः । न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वांशेन समत्वं
शक्यते शकेनापि वक्तुम्, तत्त्वे तदुच्छेदादिति भावः ॥

किं च आगमैकसमधिगम्येऽर्थे न पर्यनुयोग इत्याह—

दर्शनात् ॥ २१ ॥

परस्य ब्रह्मणो देहान्तरानुप्रवेशस्य प्रतिबिम्बभावरूपस्य 'पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः । पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' इत्यादिश्रुतौ दर्शनात् । अतो नि-
र्विशेषमेव चैतन्यैकरसं ब्रह्मेति सिद्धम् ॥

पूर्वं निषेधश्रुतिभिः ब्रह्म निर्विशेषं सिध्यतीत्युक्तमयुक्तम्, ताभिः ब्रह्मणोऽपि निषिद्धत्वादित्याक्षेपसंगत्येदमाह—

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो
ब्रवीति च भूयः ॥ २२ ॥

अत्र पूर्वपक्षे ब्रह्मासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फल-
भेदः । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इत्युपक्रम्य 'अथात आदेशो नेति नेति' इति श्रूयते । तत्र किं प्रपञ्चो ब्रह्म चेत्युभयमपि

६. प्रकृतैताव-
त्त्वाधिकरणम् ।

निषिध्यते, उत एकम्; एकमित्यत्रापि प्रपञ्चो ब्रह्म वेति संदेहे, नियामकाभावादुभयमपीति पूर्वः पक्षः। अथवा प्रपञ्चस्य प्रत्यक्षत्वेन निषेधासंभवात् निरवधिकनिषेधायोगादेकं ब्रह्मैव निषिध्यत इति पूर्वः पक्षः। सिद्धान्तस्तु—प्रकृतं प्रधानम् एतावत्त्वम् इयत्तापरिच्छिन्नं यत् ब्रह्मणो रूपद्वयम्, तत् प्रकृतैतावत्त्वम्; तदेव प्रतिषेधति 'नेति नेति' इत्यादिश्रुतिः, इतिशब्दस्य प्रधानत्वेन प्रकृतरूपद्वयपरामर्शित्वात्। ब्रह्म तु न प्रधानत्वेन प्रकृतम्, 'द्वे वाव ब्रह्मणो रूपे' इति रूपद्वयात्मकजगदुपसर्जनत्वेनाभिहितत्वात्। इतश्च ब्रह्मणो न निषेधः। हि यस्मात् ततः प्रपञ्चनिषेधानन्तरं भूयः 'न ह्येतस्मादिति नेत्यन्यत्परमस्ति' इति एतस्मात् नेति नेतीत्यादिष्टात् ब्रह्मणः अन्यत् व्यतिरिक्तं नास्ति, ब्रह्मैव तु परमस्तीत्येतन्निर्वचनवाक्यं ब्रवीति। यद्वा ततः प्रपञ्चनिषेधस्य परस्तात् 'अथ नामधेयम्....' इत्यादिवाक्यं ब्रह्म ब्रवीतीत्यर्थः। न च प्रपञ्चनिषेधे प्रत्यक्षविरोधः, तस्य व्यावहारिकप्रामाण्यादित्यनवद्यम्॥

ननु यदि ब्रह्मास्ति तर्ह्युपलभ्येत तत्राह—

**तदव्यक्तमाह हि॥ २३॥**

तत् ब्रह्म अव्यक्तं न व्यज्यते इत्यव्यक्तं प्रत्यक्षाद्यगोचरम्; हि यतः 'न चक्षुषा गृह्यते नापि वाचा' इत्यादिश्रुतिराहेत्यर्थः॥

तर्हि सर्वदा ब्रह्मग्रहणाभावे मोक्षो न स्यादित्यत आह—

**अपि च संराधने प्रत्यक्षानुमा-
नाभ्याम् ॥ २४ ॥**

अपि चैनं परमात्मानं संराधने समाध्यवस्थायां कृतार्थाः पश्यन्ति इति प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्याम् 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इत्यादिका श्रुतिः, 'यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥' इति स्मृतिः, ताभ्यामवगम्यत इत्यर्थः ॥

ननु जीवब्रह्मणोः ध्यातृध्येयभावाङ्गीकारे भेदः स्यादित्याशङ्क्याह—

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च
कर्मण्यभ्यासात् ॥ २५ ॥**

यथा सौरः प्रकाशोऽङ्गुल्याद्युपाधौ कर्मणि भिन्न इव प्रतिभाति, वस्तुतस्त्वेकरूपः; तद्वत्प्रकाशः परमात्मापि ध्यानाद्युपाधौ कर्मणि भिन्न इव भाति, वस्तुतस्तु अवैशेष्यम् एकरूपत्वमात्मनः । कुतः, अभ्यासात् 'तत्त्वमसि' इत्याद्यभेदश्रुत्यभ्यासादित्यर्थः ॥

किं च—

## अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

अतश्च भेदस्यौपाधिकत्वात् विद्यया भेदं विधूय जीवोऽनन्तेन परमात्मना एकतां गच्छति । तथाहि लिङ्गम् 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' इत्याद्यपूर्वार्थज्ञापकमित्यर्थः ॥

इत्थं जीवब्रह्मणोः पारमार्थिकाभेदमभिधाय, स्वमतपरिशुद्धये भेदाभेदवादमुपन्यस्यति—

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

ध्यातृध्येयभावादिना भेदस्याभेदस्य च श्रुतौ व्यपदेशात् जीवेश्वरयोः भेदाभेदौ भवतः । तुशब्दः सिद्धान्तवैषम्यद्योतनार्थः । अहिकुण्डलवत् अहेः संस्थानविशेषो हि कुण्डलम् , तयोरहित्वेनाभेदः कुण्डलत्वेन भेदो यथा, तद्वदित्यर्थः ॥

धर्मभेदेन भेदाभेदाविति पक्षमभिधाय, एकधर्मावच्छेदेनैव भेदाभेदाविति पक्षान्तरमाह—

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

यथा सावित्रः प्रकाशः तदाश्रयश्च सविता तयोर्नात्यन्तभेदः, तेजस्त्वाविशेषात् ; तथापि भेदश्च प्रतीयते ; एवं च एकतेज-

स्त्वावच्छेदेनैव प्रमाणबलात् भेदाभेदौ, तद्वज्जीवेश्वरयोर्भेदाभेदावित्यर्थः ॥

ननु भेदस्य पारमार्थिकत्वे ज्ञाननिवर्त्यत्वासंभवान्मोक्षो न स्यात्, एकधर्मावच्छेदेन भेदाभेदयोरेकत्राङ्गीकारे लोके विरोधकथैव न स्यात् इत्यादिदोषजातं परमते मत्वा, निरवद्यं स्वसिद्धान्तमाह—

## पूर्ववद्वा ॥ २९ ॥

'प्रकाशादिवच्चावैशेष्यम्' इत्यत्र पूर्वं भेदः काल्पनिकः अभेदः पारमार्थिकः इति यदुक्तम्, स एव सिद्धान्तोऽभ्युपेयः ॥

किं च—

## प्रतिषेधाच्च ॥ ३० ॥

'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना शास्त्रेण परमात्मव्यतिरिक्तस्य चेतनस्य, 'नेति नेति' इत्यादिना शास्त्रेण प्रपञ्चस्य च प्रतिषेधात् ब्रह्माद्वितीयमित्ययमेव सिद्धान्तः। तस्मात् श्रुतिबलात् निर्विशेषमेकमेव ब्रह्मेति सिद्धम् ॥

पूर्वम् 'नेति नेति' इति ब्रह्मातिरिक्तं वस्तु निषेध्यमित्युक्तमयुक्तम्; ब्रह्मणः सेतुत्वोन्मानादिव्यपदेशेन वस्त्वन्तरस-

त्त्वावगमात् द्युभ्वाद्यधिकरणे सेतुत्वस्य गौणत्वेन नीतत्वेऽपि उन्मानादीनां गतेरदर्शनादित्याक्षेपसंगत्येदमाह—

**परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥**

अत्र पूर्वपक्षे उन्मानादिश्रुतीनां मुख्यत्वात्सविशेषं ब्रह्मेति फलम्, सिद्धान्ते तु उक्ताद्वितीयब्रह्मसिद्धिरिति विवेकः ।

७. पराधिकरणम् । अत्र ब्रह्मातिरिक्तं वस्त्वस्ति न वेति संदेहे, पूर्वः पक्षः— अतः अस्मात् ब्रह्मणः सकाशात् परं वस्त्वस्ति; 'अथ य आत्मा स सेतुः' इति ब्रह्मणः सेतुत्वव्यपदेशात्, तथा 'ब्रह्म चतुष्पात्' इति श्रुतौ उन्मानव्यपदेशात्, एतावदिदमिति परिच्छिन्नत्वव्यपदेशात्, सुषुप्तौ 'प्राज्ञेनात्मना संपरिष्वक्तः' 'शारीर आत्मा' इत्यादिना ब्रह्मणः संबन्धव्यपदेशात्, आदित्ये हिरण्मयं पुरुषमीश्वरं व्यपदिश्य ततो भेदेन अक्षिस्थपुरुषस्य व्यपदेशात्; तस्मात् सद्वितीयं ब्रह्मेति सिद्धम् ॥

एवं पूर्वपक्षे सिद्धान्तः—

**सामान्यात्तु ॥ ३२ ॥**

तुशब्दः पूर्वपक्षनिरासार्थः । मृद्दार्वादिमये हि सेतुशब्दो रूढो लोके, न हि ब्रह्मणस्तादृशं सेतुत्वमस्ति । किं तु यथा

सेतोर्जलव्यवस्थापकत्वम्, एवं ब्रह्मणोऽपि जगन्मर्यादाव्यवस्थापकत्वेन प्रसिद्धसेतुसामान्यात् साम्यात् सेतुत्वव्यपदेश इत्यर्थः ॥

उन्मानव्यपदेशोऽपि न मुख्य इत्याह—

**बुद्ध्यर्थः पादवत् ॥ ३३ ॥**

'ब्रह्म चतुष्पात्' इति श्रुतौ उन्मानव्यपदेशो बुद्ध्यर्थः उपासनार्थः, निर्विशेषस्य बुद्धिस्थत्वायोगात् । उपासनाद्वारा बुद्धिस्थस्य उन्मानव्यपदेशो न मुख्यः । पादवत् यथा ब्रह्मप्रतीकस्य मनसो वाग्घ्राणचक्षुःश्रोत्राणामुपासनार्थं पादत्वेन व्यपदेशः, तद्वदित्यर्थः ॥

संबन्धभेदव्यपदेशावपि न मुख्यावित्याह—

**स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥**

स्थानविशेषात् स्थानमुपाधिः बुद्ध्यादिः तद्विशेषात् प्राप्तस्य भेदस्योपाध्युपशमात् य उपशमः स एव प्राज्ञेनात्मना जीवस्य सुषुप्तौ संबन्ध इत्युपाध्यपेक्षयोपचर्यते । अक्ष्यादित्यपुरुषयोर्भेदव्यपदेशोऽप्यक्ष्यादित्यरूपस्थानविशेषापेक्षयोपचर्यते । प्रकाशादिवत् यथा सौरालोकादेरङ्गुल्याद्युपाधियोगात् उपजातभेदस्योपाध्युपशमात् संबन्धव्यपदेशः, उपाधिभेदाच्च भेदव्य-

पदेशः, तद्वदित्यर्थः ॥

ननु मुख्यावेव संबन्धभेदौ किं न स्यातामित्यत आह—

उपपत्तेश्च ॥ ३५ ॥

न मुख्यसंबन्धो जीवपरयोः सुषुप्तौ भवति, 'स्वमपीतो भवति' इति स्वरूपस्यैव संबन्धत्वव्यपदेशोपपत्तेः; तथा भेदोऽपि न मुख्यः, श्रुतिसहस्रविरोधात्—इत्युपपत्तेश्चेत्यर्थः ॥

इत्थं सेतुत्वादीन् भेदहेतून् निराकृत्य, ब्रह्मणोऽद्वितीयत्वं हेत्वन्तरेणाह—

तथान्यप्रतिषेधात् ॥ ३६ ॥

यथा सेतुत्वादिहेतुभ्यो न वस्त्वन्तरप्रतिपत्तिः, तथा 'आत्मैवाधस्तात्' इत्यादिवाक्यैः अन्यस्य वस्तुनः प्रतिषेधात् अद्वितीयमेव ब्रह्मेत्यर्थः ॥

ननु ब्रह्मणोऽद्वितीयत्वे कथं सर्वगतत्वमत आह—

अनेन सर्वगतत्वमायामशब्दा-
दिभ्यः ॥ ३७ ॥

अनेन सेतुत्वादिव्यपदेशान्यथात्वस्य वस्त्वन्तरस्य च प्रतिषेधेन ब्रह्मणः सर्वगतत्वं सिद्धम् । अप्रतिषेधे प्रसिद्धसेतुवत्

ब्रह्मणो सर्वगतत्वं प्रसज्येत। कस्मात्पुनः सर्वगतत्वम्? आ-यामशब्दादिभ्यः आयामशब्दो व्यापकत्ववाचकः 'आकाशवत् सर्वगतश्च नित्यः' इत्यादिशब्दः, आदिशब्देन 'नित्यः सर्वगतः स्थाणुः' इत्यादिरुक्तः। तस्मादद्वितीयस्य ब्रह्मणः आविद्यकं सर्वमादाय श्रुतिस्मृतिभ्यां सर्वगतत्वं सिद्धम् ॥

ननु ब्रह्मातिरिक्तस्य वस्तुनो निषेधे ब्रह्मणो निर्विशेषत्वेन फलदातृत्वं न स्यादित्याक्षेपसंगत्येदमाह—

**फलमत उपपत्तेः ॥ ३८ ॥**

अत्र पूर्वपक्षे फलदातुरीश्वरस्य तत्पदवाच्यस्यासिद्धेः लक्ष्यासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। अत्र किं सर्वस्य जन्तोः कर्मण एव फलं भवति, उतेश्वरादिति संदेहे, कर्मण इति पूर्वः पक्षः। सिद्धान्तस्तु— अतः अस्मादेवेश्वरात् फलं सर्वस्य जन्तोर्भवितुमर्हति, क्षणिकात्कर्मणः फलासंभवेनेश्वरस्यैव फल-दातृत्वोपपत्तेरित्यर्थः ॥

८. फलाधिकरणम।

**श्रुतत्वाच्च ॥ ३९ ॥**

'स वा एष महानज आत्मान्नादो वसुदानः' इति ईश्वरे फलहेतुत्वस्य श्रुतत्वादीश्वरः फलदातेत्यर्थः ॥

शङ्कते—

## धर्मं जैमिनिरत एव ॥ ४० ॥

यतः श्रुत्युपपत्तिभ्याम् ईश्वरं फलदातारं मन्यते सिद्धान्ती, अत एव श्रुत्युपपत्तिभ्यां धर्मं फलदातारं जैमिनिराचार्यो मन्यते । तथाहि— 'स्वर्गकामो यजेत' इति विधिविषयस्य यागस्य स्वर्गसाधनत्वं श्रुतम् ; तन्निर्वाहाय श्रुतिप्रामाण्यादपूर्वाख्यो व्यापारो यागस्योत्तरावस्थारूपः कल्पनीय इति यागादिधर्म एव फलदाता, ईश्वरस्य सर्वसाधारणस्य विचित्रफलदातृत्वानुपपत्तेरिति ॥

समाधत्ते—

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

तुरुक्तशङ्कानिरासार्थः । पूर्वं पूर्वोक्तमीश्वरं फलदातारं बादरायणस्त्वाचार्यो मन्यते । कर्म अपूर्वं वा स्वस्वरूपस्वविनियोगसाक्षात्कारवदधिष्ठितं भवितुमर्हति, अचेतनत्वात् मृदादिवत् इत्यनुमानेन संभाविते ऽर्थे श्रुतिस्मृती प्रमाणयति— हेतुव्यपदेशात् 'एष ह्येव साधु कर्म कारयति....' 'अन्नादो वसुदानः' इति श्रुत्या, 'लभते च ततः कामान्मयैव विहितान्हितान्' इत्यादिस्मृत्या च ईश्वरस्य धर्माधर्मयोस्तत्फले च

हेतुत्वेन व्यपदेशादित्यतस्तत्तत्कर्मसापेक्षादीश्वरादेव सर्वेषां फलसिद्धिः। तदेवमधिकरणचतुष्टयेन निर्विशेषः स्वप्रकाशो निषेधाविषयोऽद्वितीयः शाखाचन्द्रन्यायेन कर्मफलदातृत्वेनोपलक्षितः तत्पदार्थः परमात्मा शोधित इति तत्त्वंपदार्थौ शोधिताविति स्थितम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्व-
प्रकाशिकायां तृतीयाध्यायस्य
द्वितीयः पादः ॥



ॐ

## तृतीयः पादः ॥

---

इत्थं पूर्वपादे वाक्यार्थज्ञानकरणभूततत्त्वंपदार्थनिरूपणमकारि; अधुना वाक्यार्थो निर्धार्यते— इति हेतुहेतुमद्भावसंगत्या अयं तृतीयः पाद आरभ्यते। सगुणविद्यायाश्चित्तैकाग्र्यद्वारा निर्गुणवाक्यार्थज्ञानोपयोगित्वात्तद्वाक्यार्थचिन्ता क्रियत इति मन्तव्यम्। तत्र तावत् पञ्चाग्निप्राणदहरशाण्डिल्यवैश्वानरोपासनास्वरूपमाह—

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

१. सर्ववेदान्तप्रत्ययाधिकरणम्।

अस्य पादान्तरत्वात् नाव्यवहिताधिकरणेन संगत्यपेक्षा। अत्र पूर्वपक्षे उपासनाभेदात् गुणानुपसंहारः, सिद्धान्ते त्वभेदादुपसंहार इति फलभेदः। अत्र तु उक्तोपासनानि किं प्रतिशाखं भिद्यन्ते, उत नेति संदेहे, नामरूपादिभेदात् भिद्यन्त इति पूर्वः पक्षः। सिद्धान्तस्तु— सर्वैर्वेदान्तैः प्रत्ययं प्रतीयमानान्युपासनानि न भिद्यन्ते। कुतः, चोदनाद्यविशेषात्,

आदिपदेन कर्माभेदहेतुत्वेनोपन्यस्ताः संयोगरूपसमाख्या गृह्यन्ते, चोदनासंयोगरूपसमाख्यानामविशेषात्। तत्र यथा सर्वशाखासु 'अग्निहोत्रं जुहुयात्' इति चोदनाया अविशेषात् नित्याग्निहोत्रमेकमेव, तथा 'यो ह वै ज्येष्ठं च श्रेष्ठं च प्राणं वेद' इत्यादिचोदनायाः छन्दोगानां वाजसनेयिनां चाविशिष्टत्वात् एकैव प्राणविद्या सर्वेषां शाखिनामिति गम्यते । यः प्राणोपासकः, सः 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' इति फलसंयोगस्य सर्वत्राविशिष्टत्वाच्च न विद्याभेदः; ज्येष्ठत्वादिगुणकप्राणस्योपास्यरूपस्य सर्वत्राविशिष्टत्वाच्च तथा प्राणविद्येति समाख्यायाः सर्वत्राविशिष्टत्वाच्च न विद्याभेद इति सिद्धम् ॥

## भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥

ननु वाजसनेयिनः पञ्चाग्निविद्यायाः 'तस्याग्निरेवाग्निर्भवति' इति षष्ठं प्रसिद्धाग्निमुपास्यत्वेनामनन्ति; छन्दोगास्तु 'पञ्चाग्नीन्वेद' इति । तथा च रूपभेदादामिक्षावाजिनयागयोरिव शाखाद्वये पञ्चाग्निविद्यायाः भेदो नैक्यमिति चेत्, न । यतः एकस्यामपि विद्यायामयं रूपभेद उपपद्यते । तथाहि—ये द्युलोकादयः पञ्चाग्नयो वाजसनेयशाखायामुक्ताः, त एव छान्दोग्ये प्रत्यभिज्ञायन्ते; तथा च न विद्याभेदो युक्तः; न च षष्ठाग्नितदभावाभ्यां भेदः; एकस्मिन्नेवातिरात्रे षोडशि-

ग्रहणतदभावयोर्दर्शनात् । यद्वा अनेकगुणप्रत्यभिज्ञानुरोधाच्छान्दोग्ये षष्ठाग्नेरनुपसंहारः कर्तव्यः । न चाग्निषु पञ्चत्वसंख्याश्रवणविरोधः, तस्य सांपादिकाग्निपरत्वादिति भावः ॥

ननु ब्रह्मविद्याप्रतिपादकमुण्डकाध्ययने शिरोव्रताख्यधर्मो विहितः नान्यत्र ; अतो धर्मभेदाद्विद्याभेद इत्याशङ्क्याह—

**स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

स्वाध्यायस्यैव शिरोव्रताख्यधर्मोऽङ्गं न विद्यायाः । कुतः, तथात्वेन हि यतः स्वाध्यायाङ्गत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे शिरोव्रतमपि वेदव्रतत्वेनाथर्वणिकाः समामनन्ति । अधिकाराच्च 'नैतदचीर्णव्रतोऽधीते' इत्यत्रत्यादधिकृतविषयादेतच्छब्दात्, चकारादधीत इत्यध्ययनशब्दाच्च शिरोव्रतमध्ययनस्यैवाङ्गम् । तत्र दृष्टान्तः, सववच्च तन्नियमः यथा सवाः सप्त होमाः सौर्यादयः शतौदनान्ताः शाखान्तरोक्तत्रेताग्न्यनभिसंबन्धात् आथर्वणोक्तैकाग्निसंबन्धाच्चैकाग्नीनामाथर्वणिकानामेव नियम्यन्ते, तद्वत्तन्नियमः मुण्डकाध्ययन एव तस्य शिरोव्रतस्य नियमः । तस्मात्सर्वत्र विद्यैक्यमनवद्यम् ॥

किं च—

**दर्शयति च ॥ ४ ॥**

'सर्वे वेदा यत्पदमामनन्ति' इति वाक्यं निर्गुणस्य ब्रह्मणो वेद्यस्य सर्ववेदान्तेषु एकत्वेन तद्विद्यायाः सर्वत्रैकत्वं दर्शयति । तथा वाजसनेयके सगुणस्य ब्रह्मणो वैश्वानरस्य प्रादेशमात्रत्वेन संपादितस्य छान्दोग्ये सिद्धवदुपादानम् 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति, तदपि सर्वत्र वैश्वानरविद्याया एकत्वं दर्शयति। एवं च सगुणस्य निर्गुणस्य वा ब्रह्मण एकत्वेन सर्वत्र श्रूयमाणत्वात् तत्तद्विद्याया एकत्वम् । तथा शस्त्रविशेषरूपोक्थादीनामेकत्वेन सर्वत्र श्रूयमाणत्वात् इदमवगम्यते— तदुपासनानामपि ऐक्यमिति । तत्समभिव्याहारादितरेषामप्युपासनानामप्यभेद इति सिद्धम् ॥

पूर्वं सर्वशाखासु विद्यैक्यमवादि, अधुना तत्फलमुच्यत इति फलफलिभावसंगत्येदमाह—

**उपसंहारोऽर्थाभेदाद्विधिशेष-**
**वत्समाने च ॥ ५ ॥**

अत्र पूर्वपक्षे पूर्वाधिकरणस्य विवक्षितफलासिद्धिः, सिद्धान्ते तस्य तत्सिद्धिरिति फलभेदः । सर्वत्रोपासनानामेकत्वेऽप्येकशाखास्थविद्यायां शाखान्तरस्थाधिकगुणानामुपसंहारोऽस्ति न वेति संदेहे,

२. उपसंहाराधिकरणम् ।

यत्र यावन्तो गुणाः श्रुताः तैरेवाकाङ्क्षाशान्तेर्नोपसंहार इति पूर्वः पक्षः। सिद्धान्तस्तु— समाने उपासने गुणोपसंहारो युक्तः। कुतः, अर्थाभेदात् उपास्यगुणैर्निर्वर्त्यस्य उपासनारूपार्थस्य सर्वशाखास्वभिन्नत्वात्। तत्र दृष्टान्तः—विधिशेषवत् यथाग्निहोत्रस्य सर्वत्रैक्यात् तच्छेषाणामुपसंहारः, तद्वदित्यर्थः॥

पूर्वम् 'चोदनाद्यविशेषात्' इत्यत्र समाख्याया अविशेषाद्विद्यैक्यमित्युक्तम्, तर्हि अत्राप्युद्गीथविद्येति समाख्याया अविशेषाद्विद्यैक्यमेवेति दृष्टान्तसंगत्येदमाह—

## अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥ ६॥

अत्र पूर्वपक्षे मिथो गुणोपसंहारः, सिद्धान्ते विद्यैक्यापवादादनुपसंहार इति फलभेदः। वाजसनेयके पठ्यते—'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' इति; तथा छान्दोग्येऽपि 'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' इति मुख्यप्राणपरिग्रहः कृतः इत्युभयत्रापि प्राणविद्याविधिरवसीयते। किमत्र विद्यैक्यम्, आहोस्विद्विद्याभेद इति संशये, विद्यैक्यमिति पूर्वः पक्षः। ननु अन्यथात्वं न विद्यैक्यं

३. अन्यथात्वाधिकरणम्।

भवितुमर्हति । कुतः, 'त्वं न उद्गाय' इति उद्गीथकर्तृत्वेन एकत्र, अन्यत्र 'तमुद्गीथमुपासांचक्रिरे' इत्युद्गीथत्वेन प्राणस्योपास्यत्वप्रतिपादकात् शब्दात् इति चेत्, नैतावता विद्याभेदः । कुतः, देवासुरसंग्रामोपक्रमासुरात्ययाभिप्रायप्रभृतीनामुभयत्राविशेषात् । अतो विद्यैक्यमिति सिद्धम् ॥

एवं पूर्वपक्षे, राद्धान्तः—

**न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥**

नैव विद्यैक्यं युक्तम् । कुतः, प्रकरणभेदात् एकत्र 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति उद्गीथावयव ओंकारे प्राणदृष्टिरुपदिश्यते, अन्यत्र तु 'त्वं न उद्गाय' इति या सकलैव सामभक्तिः तस्याः कर्तोद्गाता प्राणत्वेनावेद्यते इत्युपक्रमभेदात् । तत्र दृष्टान्तः—परोवरीयस्त्वादिवत् । यथा परमात्मदृष्ट्यध्याससाम्येऽपि 'स एष परोवरीयानुद्गीथः' इति परोवरीयस्त्वादिविशिष्टमुद्गीथोपासनम् अक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिविशिष्टोद्गीथोपासनात् भिन्नम्, तद्वत् ॥

**संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥**

ननु उद्गीथविद्येत्युभयत्र संज्ञातः संज्ञाया एकत्वाद्विद्यै-

क्यमिति चेत्, तदुक्तम् 'न वा प्रकरणभेदात्....' इति सूत्रे। अस्ति तु तत् संज्ञैकत्वं प्रसिद्धभेदानामप्यग्निहोत्रप्रभृतीनां काठकैकग्रन्थपठितानां काठकत्वसंज्ञैकत्वम् ॥

पूर्वम् 'ओमित्येतदक्षरमुद्गीथम्' इत्यत्र ओंकारोद्गीथयोः विशेषणविशेष्यभावं सिद्धवत्कृत्य प्रक्रमभेदाद्विद्याभेदः सिद्धान्तितः; स न युक्त इत्याक्षेपसंगत्येदमाह—

**व्याप्तेश्च समञ्जसम् ॥ ९ ॥**

अत्र पूर्वपक्षे पूर्वोक्तसिद्धान्तासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। अत्र 'ओमित्येतदक्षरमुद्गीथम्' इत्योंकारोद्गीथशब्दयोः सामानाधिकरण्यं श्रूयते; तत्किं नाम ब्रह्मेतिवत् अध्यासार्थम्, उत यद्रजतं सा शुक्तिः इतिवत् अपवादार्थम्, आहोस्वित् सिन्धुरः करीतिवत् ऐक्यप्रमित्यर्थम्, उताहो नीलोत्पलमितिवत् विशेषणविशेष्यभावनिबन्धनमिति संशये, निर्धारणे कारणाभावादनिर्धारितार्थकमिदमिति पूर्वः पक्षः। सिद्धान्तस्तु— ओंकारस्य ऋग्यजुःसामसु त्रिषु व्याप्तेः व्याप्तत्वात् क ओंकार उपास्य इत्यपेक्षायामुद्गीथावयवत्वेन ओंकारो विशेष्यते— 'ओमित्येतदक्षरमुद्गीथमुपासीत' इति। एवं च उद्गीथमित्योंकारस्य विशेषणमित्येव समञ्जसं निरवद्यम्। सौत्रच-

४. व्याप्त्यधिकरणम्।

शब्देन तुशब्दस्थाननिवेशिना अध्यासापवादैक्यपक्षाणां निरासः । न तावदध्यासपक्षः, तस्योत्तरत्र विधीयमानोपास्त्यपेक्षया स्वतन्त्रोपास्तित्वेन पृथक्फलकल्पनाप्रसङ्गात्, विशेषणपक्षे तु न पृथक्फलकल्पनाप्रसङ्गः; नाप्यपवादपक्षः, ओंकारोद्गीथयोरन्यतरज्ञानस्य बाधकत्वादर्शनात्; नाप्यैक्यपक्षः, ओंकारोद्गीथयोः पर्यायत्वाभावात् । अतः परिशेषाद्विशेषणपक्ष एव श्रेयानिति सिद्धम् ॥

पूर्वमुद्गीथत्वविशेषणात् ओंकारस्य सर्ववेदव्याप्तिव्यावृत्तिवत् 'एवं विद्वान' इति प्रकृतगुणमात्रग्राहकैवंशब्दाच्छाखान्तरगुणव्यावृत्तिरिति दृष्टान्तसंगत्येदमाह—

**सर्वाभेदादन्यत्रेमे ॥ १० ॥**

अत्र पूर्वपक्षे गुणानुपसंहारः, सिद्धान्ते उपसंहार इति फलभेदः । अत्र वाजसनेयके छान्दोग्ये च प्राणविद्यायां वा-

५. सर्वाभेदाधिकरणम् ।

गादयो वसिष्ठत्वादिगुणाः श्रूयन्ते, न कौषीतक्यादिशाखासु । तत्र किं वसिष्ठत्वादिगुणाः अन्यत्रोक्ताः अन्यत्र नोपसंह्रियन्ते, उतोपसंह्रियन्ते इति संदेहे, नोपसंहर्तव्या इति पूर्वः पक्षः । सिद्धान्तस्तु— अन्यत्र वसिष्ठत्वादिगुणानामश्रवणस्थले इमे वसिष्ठत्वादयो गुणा उपसंहर्तव्याः । कस्मात्, सर्वाभेदात् सर्वासु शाखासु

प्राणसंवादस्थायाः प्राणविद्यायाः अभिन्नत्वात्। अत एव प्रकृतगुणानामिव अप्रकृतगुणानामपि बुद्धिस्थतया एवंशब्द-ग्राह्यत्वात् सर्वे सर्वत्रोपसंहर्तव्या इति सिद्धम् ॥

ननु प्राणस्य सविशेषत्वात् भवतु शाखान्तरीयवसिष्ठत्वाद्युपसंहारः; ब्रह्मणस्तु निर्विशेषत्वात् स्वशाखागतधर्मैरेव प्रमितिसिद्धेः न शाखान्तरगतानन्दाद्युपसंहार इति प्रत्युदाहरणसंगत्येदमाह—

**आनन्दादयः प्रधानस्य ॥ ११ ॥**

अत्र पूर्वपक्षे आनन्दादिगुणानुपसंहारात् वाक्यार्थानिर्धारणम्, सिद्धान्ते तन्निर्धारणमिति फलभेदः। अत्र निर्गुणब्रह्म-

६. आनन्दाद्यधिकरणम्।

परासु श्रुतिषु आनन्दस्वरूपत्वादयो धर्माः क्वचित् क्वचित् श्रूयन्ते; ते किं सर्वत्रोपसंहर्तव्याः, उत नेति संदेहे, नोपसंहर्तव्या इति पूर्वः पक्षः। सिद्धान्तस्तु— प्रधानस्य ब्रह्मण आनन्दादयः आनन्दस्वरूपत्वादयो धर्माः सर्वत्रोपसंहर्तव्याः, सर्वशाखासु वेद्यस्य ब्रह्मण एकत्वेन विद्याया एकत्वादित्यर्थः ॥

ननु यदि ब्रह्मण एकत्वादानन्दाद्युपसंहारः, तर्हि प्रियशिरस्त्वादिधर्मोपसंहारोऽपि स्यादित्याशङ्क्याह—

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

प्रियशिरस्त्वादिधर्माणां न सर्वत्र प्राप्तिः; हि यस्मात् प्रियमोदप्रमोदानन्दानां परस्परापेक्षया उपचयापचयौ वृद्धिक्षयावनुभूयेते । तौ च धर्मिभेदे सत्येव स्वाभाविकौ भवतः, ब्रह्मणस्तु निर्भेदत्वात् । एतेन संयद्वामत्वादयो ब्रह्मधर्मा व्याख्याताः, तेषामप्युपास्यगुणत्वाविशेषात् ॥

ज्ञानोपयोगित्वात् आनन्दादीनां संयद्वामत्वादिधर्मेभ्यो वैषम्यमाह—

## इतरे त्वर्थसामान्यात् ॥ १३ ॥

उपास्यधर्मापेक्षया इतरे तु आनन्दादयो धर्माः ज्ञानैकफलाः सर्वत्रोपसंह्रियन्ते । कुतः, अर्थसामान्यात् अर्थस्य प्रतिपाद्यस्य ब्रह्मणः सामान्यात् एकत्वादित्यर्थः । एवं च अन्तरेण गुणोपसंहारं यथावद्ब्रह्मस्वरूपविषयकमहावाक्यार्थज्ञानसाध्याया अविद्यानिवृत्तेरसंभवात् सर्वत्रानन्दादय उपसंहर्तव्या इति सिद्धम् ॥

पूर्वत्र ब्रह्मस्वरूपाणामानन्दादीनामुपसंहार्याणां ब्रह्मज्ञानोपायत्वमभिहितम्; अधुना तु अब्रह्मस्वरूपस्यानुपसंहार्यस्यार्थादिपरत्वरूपधर्मस्य प्रज्ञानोपायत्वमभिधीयत इत्येकफलत्वसंगत्येदमाह—

## आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

अत्र पूर्वपक्षे वाक्यभेदाद्विद्याभेदः, सिद्धान्ते वाक्यैक्याद्विद्यैक्यमिति फलभेदः। कठवल्लीषु पठ्यते— 'इन्द्रियेभ्यः परा ह्यर्थाः' इत्यारभ्य 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति। तत्र किम् इमानि वाक्यानि भिन्नानि, उत आत्मपरमेकमेव वाक्यमिति संदेहे, प्रतिपाद्यभेदात् भिन्नानीति पूर्वः पक्षः। सिद्धान्तस्तु— आध्यानाय ध्यानसाध्यसाक्षात्काराय पुरुष एवार्थादिभ्यः सर्वेभ्यः परत्वेन प्रतिपाद्य इत्येकमेव वाक्यम्। न त्विन्द्रियपरत्वे अर्थादयः प्रतिपाद्याः, प्रयोजनाभावात्। न हि इन्द्रियपरत्वेनार्थज्ञानं स्वतः किंचित्प्रयोजनं जनयति। अतः प्रतिपाद्यभेदाभावान्न वाक्यभेदः॥

७. आध्यानाधिकरणम्।

इत्थं वाक्यस्यात्ममात्रपरत्वे फलवत्त्वं लिङ्गमभिधाय, अपूर्वत्वमपि लिङ्गमाह—

## आत्मशब्दाच्च ॥ १५ ॥

'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः।' इति प्रकृतपुरुषे आत्मशब्दश्रवणाच्च आत्मपरमेवेदं वाक्यम्, तस्यात्मनः श्रुत्या मानान्तरावेद्यत्वरूपापूर्वत्वप्रतिपादनादिति भावः॥

पूर्वं वाक्यभेदमभिधाय, अर्थादीनां पृथक्प्रतिपाद्यत्वं नास्तीत्यभिहितम्; तद्वत् 'प्रजापते रेतो देवाः' इति पूर्ववाक्ये हिरण्यगर्भस्य प्रकृतत्वाद्वाक्यभेदभिया स एवात्मशब्देनाभिधीयत इति दृष्टान्तसंगत्येदमाह—

## आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥

८. आत्मगृहीत्यधिकरणम् ।

अत्र पूर्वपक्षे आत्मपदस्य परमात्मपरत्वाभावात् तत्प्रमित्यर्थं न आनन्दादिधर्माणामत्रोपसंहारः, सिद्धान्ते परमात्मन एव अत्रोक्तत्वात् तत्प्रमित्यर्थं तदुपसंहार इति फलभेदः । ऐतरेयके श्रूयते—'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्' इत्यादि । तत्र किमात्मशब्देन हिरण्यगर्भ उच्यते, उत परमात्मेति संदेहे, हिरण्यगर्भ इति पूर्वः पक्षः । सिद्धान्तस्तु— अस्मिन् सृष्टिवाक्ये आत्मशब्देन परमात्मन एव गृहीतिः ग्रहणं नान्यस्य । इतरवत् यथा इतरेषु सृष्टिवाक्येषु 'आत्मन आकाशः संभूतः' इत्यादिषु आत्मशब्देन परमात्मन एव ग्रहणम्, तद्वदत्रापि । कुतः, उत्तरात् 'स ईक्षत लोकान्नु सृजा इति' 'स इमाँल्लोकानसृजत' इति ईक्षणपूर्वकस्रष्टृत्वरूपोत्तरविशेषणादित्यर्थः । तच्च विशेषणं परमात्मन्येव मुख्यत्वेन श्रुत्यन्तरेष्ववगतमिति भावः ॥

पूर्वपक्षबीजमनूद्य दूषयति—

**अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥**

लोकसृष्टिवाक्यपर्यालोचनया हिरण्यगर्भ एव वाक्यान्वयात् न परमात्मग्रहणं युक्तमिति चेत्, अत्राह— परमात्मन एव ग्रहणं युक्तं स्यात्। कुतः, अवधारणात् 'आत्मा वा इदमेक एवाग्र आसीत्' इति सृष्टेः प्रागेकत्वावधारणस्य परमात्मन्येव समञ्जसत्वात्। ततश्च अत्र शाखान्तरोक्तभूतसृष्टिरुपसंहर्तव्येत्यदोषः। इति प्रथमं वर्णकम् ॥

पूर्वत्र वाक्यैक्यबलात् अर्थादिपरत्वं परित्यज्य विद्यैक्यमवादि, इह तूपक्रमभेदेन वाक्यभेदाद्विद्यैक्यं न स्यात् इति प्रत्युदाहरणसंगत्येदमाह— **आत्मगृहीतिरितरवदुत्तरात्** ॥ अत्र पूर्वपक्षे विद्याभेदाद्गुणानुपसंहारः, सिद्धान्ते तदभेदात्तदुपसंहार इति फलभेदः। बृहदारण्यके 'कतम आत्मा' इत्यात्मशब्देन उपक्रम्य 'स वा एष महानज आत्मा' इत्यात्मशब्देन उपसंहृतम्; छान्दोग्ये तु 'सदेव सोम्येदमग्र आसीत्' इति विनैवात्मशब्दं सन्मात्रत्वेनोपक्रम्य 'स आत्मा तत्त्वमसि' इति उपसंहृतम्। तत्र किम् अनयोर्वाक्ययोस्तुल्यार्थत्वम्, उत भिन्नार्थत्वमिति संशये, भिन्नार्थत्वमिति पूर्वः पक्षः। सिद्धान्तस्तु— छान्दोग्ये सत्पदेन आत्मन एव गृहीतिः ग्रहणम्; इतरवत् बृहदारण्यके आत्मप-

देन आत्मग्रहणवत् । कुतः, उत्तरात् 'स आत्मा' इत्युपसंहारबलात् । अत उभयत्र तुल्यार्थत्वमित्यर्थः ॥

**अन्वयादिति चेत्स्यादवधारणात्** । ननु उपसंहारबलात् सत्पदेन आत्मगृहीतिरित्यसंगतम्, उपसंहारस्योपक्रमान्वयात् उपक्रमपरतन्त्रत्वादिति चेत्तत्राह— सत्पदेन आत्मगृहीतिर्युक्ता स्यात् । कुतः, 'सदेव' इत्यद्वितीयत्वावधारणात् इत्यर्थः । इति द्वितीयं वर्णकम् ॥

पूर्वत्र संदिग्धसदुपक्रमस्य वाक्यशेषान्निर्णयवत् 'आचामन्ति' इति वर्तमानापदेशस्य विधित्वसंदेहे, 'आचामेत्' इति वाक्यशेषात् विधित्वनिर्णय इति दृष्टान्तसंगत्येदमाह—

**कार्याख्यानादपूर्वम्** ॥ १८ ॥

अत्र पूर्वपक्षे प्राणविद्याङ्गत्वेन अपूर्वस्याचमनस्य विधेयत्वात् तस्यान्यत्र प्राणविद्यायामुपसंहारः, सिद्धान्ते तु अनुपसंहार इति फलभेदः । बृहदारण्यकच्छान्दोग्ययोरुभयत्र 'एवंविदशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदनमनग्नं कुरुते' इति श्रूयते । तत्राचमनमनग्नताचिन्तनं च प्रतीयते; तत्रोभयविधाने वाक्यभेदभयादेकमेव विधेयम्; तदेकं किमाचमनम्, उतानग्नताचिन्तनमिति संशये, आचमनमिति पूर्वः पक्षः । सिद्धान्तस्तु—अनग्नताचि-

१. कार्याख्यानाधिकरणम् ।

न्तनमेवापूर्वं प्राणविद्याङ्गत्वेन विधेयम्, नाचमनम्। कुतः, कार्याख्यानात् 'द्विजो नित्यमुपस्पृशेत्' इत्यादिना स्मार्तविधिना सकलानुष्ठानाङ्गत्वेन शुद्ध्यर्थं कार्यस्याचमनस्य प्राणविद्यायामपि विधिप्राप्तस्याख्यानादनग्नताविधानार्थमनुवादादित्यर्थः ॥

पूर्वत्र प्राप्ताचमनानुवादेनानग्नताचिन्तनं विधेयमित्युक्तम्; इह तु एकशाखायां विप्रकृष्टदेशस्थवाक्ययोरेकस्यानुवादकत्वमन्यस्य विधायकत्वमिति अनिश्चयादुभयोरपि स्वनिकटस्थगुणविशिष्टविद्याविधायकत्वमिति प्रत्युदाहरणसंगत्येदमाह—

## समान एवं चाभेदात् ॥ १९ ॥

अत्र पूर्वपक्षे विद्ययोर्भेदात् गुणानुपसंहारः, सिद्धान्ते विद्यैक्यात् गुणोपसंहार इति फलभेदः। वाजसनेयशाखायामग्निरहस्ये शाण्डिल्यविद्या श्रूयते— 'स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्यादिना। तत्रैव बृहदारण्यके पुनः सैव श्रूयते— 'मनोमयोऽयं पुरुषो भाः सत्यः' इति। तत्र किम् अग्निरहस्यबृहदारण्यकस्थयोर्विद्ययोर्भेदः, उतैक्यमिति विशये, अनयोर्विद्ययोर्भेद इति पूर्वः पक्षः। सिद्धान्तस्तु—यथा भिन्नासु शाखासु विद्यैक्यं गुणोपसंहारश्च भवति, एवं समाने च समानायामपि शाखायां भवितुं युक्तम्। कुतः, अभेदात् उपास्यस्य मनोमय-

१०. समानाधिकरणम्।

त्वादिगुणकस्योभयत्राप्यभेदेन प्रत्यभिज्ञानात् । एवं च अग्नि-रहस्ये विद्यां विधाय बृहदारण्यके तदनुवादेन सर्वेशानत्वादयो गुणा विधीयन्ते इति उभयत्र शाण्डिल्यविद्यैक्यमिति सिद्धम् ॥

पूर्वेण दृष्टान्तसंगत्येदमाह—

## संबन्धादेवमन्यत्रापि ॥ २० ॥

अत्र पूर्वपक्षे प्रतिस्थानं नामद्वयानुष्ठानम्, सिद्धान्ते यथा-श्रुत्यैकैकनामानुष्ठानमिति फलभेदः । बृहदारण्यके सत्यविद्या-

११. संबन्धाधिकरणम् ।

यामाधिदैविकपुरुषस्यादित्यस्याहरित्येतन्नाम ध्यानायोपदिष्टम्, आध्यात्मिकस्य त्वक्षिपु-रुषस्याहमित्येतन्नामेति । तत्र किमस्यां सत्यविद्यायां नाम्नोः व्यवस्थया ध्यानं कर्तव्यम, उत नामद्वयस्य प्रतिस्थानं ध्यान-मिति संशये, यथा शाण्डिल्यविद्यायामेकशाखायां विभागेना-धीतायामेकविद्यात्वसंबन्धादन्योन्यं गुणोपसंहारः पूर्वमुक्तः, एवमन्यत्रापि सत्यविद्यायां भवितुं युक्तम्, एकविद्यात्वसंब-न्धादिति पूर्वः पक्षः ॥

सिद्धान्तस्तु—

## न वा विशेषात् ॥ २१ ॥

नैवोभयोरुभयत्रोपसंहारः । कुतः, विशेषात् तस्याहरिति तस्या-हमिति चायतनविशेषव्यपाश्रयेणैवोपनिषदोर्विशेषोपदेशात् ॥

किं च—

## दर्शयति च ॥ २२ ॥

विद्यान्तरे हिरण्यश्मश्रुरित्यादिना आदित्यपुरुषस्य रूपमुक्त्वा तद्रूपमक्षिपुरुषेऽतिदिशति— 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम' इति। सोऽयमतिदेशो विद्यास्थले स्थानभेदान्नोपसंहार इति दर्शयति; इतरथायमतिदेशो निरर्थक एव स्यात्। अतो नाम्नोर्व्यवस्थेति सिद्धम् ॥

पूर्वोक्तन्यायमतिदिशति—

## संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

अस्यातिदेशत्वान्न पृथक्संगत्यपेक्षा। अत्र पूर्वपक्षे विद्याभेदस्य गुणव्यवस्थापकत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति

१२. संभृत्यधिकरणम।

फलभेदः। राणायनीयानां खिलेषु पठ्यते— 'ब्रह्मज्येष्ठा वीर्या संभृतानि, ब्रह्माग्रे ज्येष्ठं दिवमाततान' इति। तत्र श्रूयमाणं संभृतिद्युव्याप्त्यादिकं तदीयोपनिषद्विहितशाण्डिल्यादिब्रह्मविद्यासूपसंहर्तव्यम, न वेति संदेहे, उपसंहर्तव्यमिति पूर्वः पक्षः। सिद्धान्तस्तु— 'वीर्या संभृतानि' इति या वीर्यसंभृतिः वीर्यसमृद्धिः, या च 'दिवमाततान' इति द्युलोकव्याप्तिः, तयोः समाहारः संभृतिद्युव्याप्ति; तदपि नोपसंहर्तव्यम। कुतः, अतश्च अत एव नाम्नोरिव व्यव-

स्थापकस्थानविशेषादेव । तस्मात् संभृत्यादिगुणविशिष्टमुपासनान्तरं तत्र विधेयमिति सिद्धम् ॥

पूर्वत्रासाधारणगुणप्रत्यभिज्ञानाभावान् संभृत्यादिगुणाविशिष्टविद्याभेद उक्तः; इह त्वसाधारणमरणावभृथगुणविशिष्टपुरुषयज्ञरूपैक्यप्रत्यभिज्ञानाद्विद्यैक्यमिति प्रत्युदाहरणसंगत्येदमाह—

**पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥**

अत्र पूर्वपक्षे विद्याभेदादुपसंहारः । सिद्धान्ते तद्भेदादनुपसंहार इति फलभेदः । पैङ्गिरहस्ये 'पुरुषो वाव यज्ञः' इति पुरुषविद्या श्रूयते; तत्र आशीर्मन्त्रप्रयोगादयो धर्माश्च श्रूयन्ते; तैत्तिरीयेऽपि 'तस्यैवं विदुषो यज्ञस्यात्मा' इत्यादि; तत्रेतरत्रोक्ताः पुरुषयज्ञस्य धर्मास्तैत्तिरीयकेऽप्युपसंहर्तव्याः, उत नेति संशये, उपसंहर्तव्या इति पूर्वः पक्षः । सिद्धान्तस्तु— पुरुषविद्यायामिव यथा पैङ्गिनां पुरुषविद्यायां पुरुषो यज्ञत्वेन कल्पितः, तदीयमायुस्त्रेधा विभज्य सवनत्वेन कल्पितम्, अशिशिषादीनि च दीक्षादिभावेन कल्पितानि; तथेतरेषां तैत्तिरीयकाणां पुरुषविद्यायां सवनत्वादीनामनाम्नानात् । तेषां हि पुरुषविद्याया पुरुषसंबन्धियज्ञोऽनुक्रान्तः पत्नीयजमानवेदवेदिबर्हिर्यूपादिकं

१३. पुरुषविद्याधिकरणम् ।

चानुक्रान्तम् । यत्तु मरणावभृथगुणस्य विद्यैक्यप्रत्यभिज्ञापकत्वमवादि, तन्न ; बहुगुणभेदे एकस्य प्रत्यभिज्ञापकत्वायोगात् । अतो विद्यैक्याभावान्नोपसंहर्तव्या इति सिद्धम् ॥

पूर्वं यथा पुरुषयज्ञस्यात्मविद्यासंनिधानात् तच्छेषत्वम्, तथा मन्त्राणां कर्मणां च तत्तद्विद्यासंनिधानात्तच्छेषत्वमस्त्विति दृष्टान्तसंगत्येदमाह—

## वेधाद्यर्थभेदात् ॥ २५ ॥

अत्र पूर्वपक्षे मन्त्रादीनां विद्याशेषत्वेनोपसंहारः, सिद्धान्ते त्वनुपसंहार इति फलभेदः । आथर्वणिकानामुपनिषदारम्भे 'सर्वं प्रविध्य हृदयं प्रविध्य' इत्यादयो मन्त्राः पठिताः । काण्वानामुपनिषदादौ 'देवा ह वै सत्रं निषेदुः' इत्यादि प्रवर्ग्यब्राह्मणं पठितम् । तत्र किमेते 'सर्वं प्रविध्य' इत्यादयो मन्त्राः प्रवर्ग्यादीनि च कर्माणि विद्यासूपसंह्रियेरन्, न वेति संदेहे, उपसंह्रियेरन्निति पूर्वः पक्षः । सिद्धान्तस्तु— नोपसंह्रियेरन् । कुतः, वेधाद्यर्थभेदात् 'सर्वं प्रविध्य' इत्यादिमन्त्रप्रकाशितानां वेधादीनामर्थानामाभिचारिककर्मादिसमवेतानां भेदात् विद्यासु असमवेतत्वादित्यर्थः । एवं च आभिचारिककर्मादिसमवेतार्थप्रकाशनसामर्थ्यलक्षणं लिङ्गं संनिधिं दुर्बलं तिरस्कृत्य मन्त्राणामाभि-

१४. वेधाद्यधिकरणम् ।

चारिककर्माङ्गत्वं साधयतीति न विद्याङ्गत्वम्; प्रवर्ग्यादिकर्मणां च संनिधेर्बलीयसा श्रुत्यादिना ज्योतिष्टोमादौ विनियुक्तानां न विद्याशेषत्वमिति भावः ॥

यथा पूर्वं विद्यासंनिधौ श्रुतस्यापि मन्त्रादेर्विद्यायामनावश्यकत्वात् अनुपसंहार उक्तः, तथा क्वचित् हानसंनिधौ श्रुतस्याप्युपादानस्य अन्तरेणाप्युपादानं तूष्णीं हानसंभवेनानावश्यकत्वात् अनुपसंहार इति दृष्टान्तसंगत्येदमाह—

**हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥**

अत्र पूर्वपक्षे विद्यास्तुतिप्रकर्षासिद्धिः, सिद्धान्ते तु उपादानस्यात्रोपसंहाराद्विद्यास्तुतिप्रकर्षसिद्धिः इति फलभेदः ।

१५. हान्यधिकरणम् । अत्र शाट्यायनिनः पठन्ति 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति; ताण्डिनस्तु 'अश्व इव रोमाणि विधूय पापम्' इत्याद्यामनन्ति; तथाथर्वणिकाः 'तथा विद्वान्पुण्यपापे विधूय' इत्याद्यामनन्ति । तत्र शाट्यायनिश्रुतौ पुण्यपापयोरुपादानमात्रं श्रुतम् । तच्च त्यागं विना न संभवति इति पुण्यपापत्याग आक्षिप्यते । यत्र तु ताण्ड्याथर्वणवाक्यद्वये पुण्यपापत्यागमात्रं श्रुतम्, तत्र त्यक्तयोरुपादानमन्यत्र श्रुतम् अत्रोपसं-

हर्तव्यं न वेति संदेहे, नेति पूर्वः पक्षः । सिद्धान्तस्तु— सौत्र-तुशब्दः कैवल्यवाची । तथा च केवलहानौ श्रुतायां सत्यां तत्रोपादानमुपसंहर्तव्यम् । कुतः, उपायनशब्दशेषत्वात् 'तत् सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति अप्रिया दुष्कृतम्' इति कौषीतकिरहस्ये हानसंनिधौ श्रूयमाणस्य हानशब्देनापेक्षितस्य उपादानात्मकोपायनशब्दस्य हानंप्रति शेषत्वावगमादित्यर्थः । अश्वरोमदृष्टान्तेन विधूतयोः पुण्यपापयोः परत्रावस्थानसापेक्षत्वात् परैरुपादानमावश्यकमिति भावः । शाखान्तरस्थोऽपि विशेषः शाखान्तरेऽप्यपेक्षितः उपसंहरणीय इत्यत्र दृष्टान्तमाह— कुशाच्छन्दस्तुत्युपगानवत् कुशावत् छन्दोवत् स्तुतिवदुपगानवत् । तत्र यथा 'कुशा वानस्पत्याः' इति भाल्लविनां श्रुतौ कुशानामविशेषेण वनस्पतियोनित्वश्रवणे शाट्यायनिनामौदुम्बरा इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते, यथा च्छन्दोभिः स्तुवत इत्यत्र देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्गिश्रुत्या प्रतीयते, यथा षोडशिनः पात्रविशेषस्य ग्रहणे अङ्गभूतं स्तोत्रं कदा कर्तव्यमित्यपेक्षायां छन्दोगानां कालविशेषाप्राप्तौ 'समयाविषिते सूर्ये' इत्यादितैत्तिरीयकश्रुत्या कालविशेषः प्रतीयते, यथा 'ऋत्विज उपगायन्ति' इति

सामान्यवाक्यं शाखान्तरीयं 'नाध्वर्युरुपगायति' इति विशेषवचनमपेक्ष्य अध्वर्युवर्जिता ऋत्विज उपगायन्ति इत्येतदर्थपरतया निश्चीयते। एवं च यथा कुशादिषु श्रुत्यन्तरगतविशेषान्वयः, तथा हानावुपायनान्वय इति सिद्धम् । श्रुत्यन्तरगतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्र अष्टदोषदुष्टविकल्पः स्यात् । स चान्याय्यः सत्यां गतौ । तदुक्तं द्वादशलक्षण्यां जैमिनिना 'विप्रतिषेधे विकल्पः स्यात्' इति । इति प्रथमं वर्णकम् ॥

पूर्वं मन्त्रादीनां विद्यासंनिधेरकिंचित्करत्वमुक्तं यथा, तथात्रापि विधूननशब्दस्योपायनशब्दसंनिधिरप्रयोजक इति दृष्टान्तसंगत्येदं वर्णकान्तरमाह— **हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम्** । अत्र पूर्वपक्षे विद्यावशात् सुकृतादिहान्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । उदाहृतश्रुतिष्वेव किं पुण्यपापयोर्विधूननं हानमभिप्रेतम्, उत तयोः फलतश्चालनमिति विशये, चालनमेवेति पूर्वः पक्षः । सिद्धान्तस्तु—हानावेवायं विधूननशब्दो वर्तितुमर्हति । कुतः, उपायनशब्दशेषत्वात् उपायनशब्दसंनिधौ श्रूयमाणस्य विधूननशब्दस्योपायनं प्रति शेषत्वादित्यर्थः । एवं च उपादानात्मकोपायनस्य हानं विना असंभवात् विधू-

ननशब्देन 'धूञ् कम्पने' इति धात्वर्थचलनवाचकेनापि हान-मेव लक्ष्यमिति भावः । ननु उपायनशब्दसंनिधौ श्रूयमाणस्य विधूननशब्दस्य हानलक्षकत्वेऽपि केवलविधूननशब्दस्य न तल्लक्षकत्वम्, निश्चायकाभावादित्याशङ्क्याह— कुशा-च्छन्दस्तुत्युपगानवत् । यथा कुशादिस्थले शाखान्तरीयविशे-षश्रवणं निर्णायकम्, तथेहापि क्वचिद्विधूननसंनिधौ श्रूयमा-णमुपायनं सर्वत्र विधूननस्य हानलक्षकत्वे निश्चायकमित्यर्थः । तदुक्तमिति पूर्ववद्व्याख्येयम् ॥

पूर्वं विद्यायाः कर्महानिहेतुत्वं सिद्धं कृत्वा केवलहानश्र-वणे उपायनोपसंहार उक्तः; संप्रति विद्यायाः कर्महानिहे-तुत्वं नास्तीत्याक्षेपसंगत्येदमाह—

**सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥**

अत्र पूर्वपक्षे विद्यासामर्थ्यानादरः, सिद्धान्ते तदादर इति फलभेदः । कौषीतकिश्रुतौ 'विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' इति पर्यङ्कस्थब्रह्मोपासकस्य कर्महानिः श्रूयते । तत्र

१६. सांपरायाधिकरणम्।

किं विरजानदीतरणानन्तरं कर्महानिः, उत देहत्यागात् प्राक्काल इति विशये, श्रुतिबलात् नदीतरणानन्तरमेवेति पूर्वः पक्षः । सिद्धान्तस्तु— सांपराये देहत्यागात् प्राक्

परलोकसाधनीभूतविद्याकाल एव कर्महानिर्युक्ता। कुतः, तर्तव्याभावात् नदीतरणानन्तरं पुण्यपापकर्मणः तर्तव्यस्य प्राप्तव्यस्य फलान्तरस्याभावात्। ननु कर्महानिहेतोरभावात् इति चेत्, न; कर्महानिहेतोर्विद्यायाः प्राक्सत्त्वात्, कर्महानिं विना नदीतरणानुपपत्तेश्च। अतो जीवत एव विद्यासामर्थ्यात् कर्महानिः। तथा ह्यन्ये शाखिनस्ताण्ड्यादयो जीवद्दशायामेव कर्महानिम् 'अश्व इव रोमाणि' इत्यादावधीयत इत्यर्थः॥

ननु कर्महानेर्विद्याफलत्वे ब्रह्मप्राप्तेरिव देहत्यागोत्तरकालीनत्वं स्यात्; अत आह—

## छन्दत उभयाविरोधात्॥ २८॥

छन्दतः स्वेच्छातो विद्यानुष्ठानं जीवत एवेति तद्धेतुककर्मक्षयो जीवत एव युक्तः, सति हेतौ कार्यविलम्बायोगात्। एवं सति विद्याकर्मक्षययोर्निमित्तनैमित्तिकभावे ताण्ड्यादिश्रुत्योरुभयोरविरोधो भवतीत्यर्थः। ब्रह्मप्राप्तेर्देहत्यागं विनानुपपत्तेः प्रकृते चानुपपत्त्यभावात् जीवत एव कर्मक्षय इति भावः॥

इत्थं प्रासङ्गिकं विद्योदयानन्तरमेव कर्महानमित्यभिधाय यथा हानसंनिधौ क्वचिच्छ्रूयमाणमुपायनं सर्वत्रोपसंह्रियते, तथा हानसंनिधौ क्वचिच्छ्रूयमाणो देवयानः पन्थाः सर्व-

त्रोपसंहर्तव्य इति दृष्टान्तसंगत्येदमाह—

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ २९ ॥**

१७. गतेरर्थवत्त्वाधिकरणम्।

तत्र पूर्वपक्षे निर्गुणविदोऽपि मुक्त्यर्थं मार्गापेक्षा, सिद्धान्ते त्वनपेक्षेति फलभेदः। कर्महानसंनिधौ क्वचिद्देवयानः पन्थाः श्रुतः, क्वचिन्न श्रुतो निर्गुणविद्यास्थले। तत्र किं देवयानोपसंहारोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— गतेर्देवयानस्य पथः अर्थवत्त्वमुभयथा विभागेन भवितुमर्हति— क्वचित् सगुणविद्यायां देवयानमार्गोऽस्ति, क्वचिन्निर्गुणविद्यायां नेति। अन्यथा सर्वत्र देवयानमार्गोपसंहाराङ्गीकारे 'विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति श्रुतिविरोधः स्यात्। अतो निर्गुणविद्यायां मार्गोपसंहारो व्यर्थ इत्यर्थः ॥

ननु तर्हि सगुणविद्यायामपि मार्गो व्यर्थः स्यादित्यत आह—

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥**

गतेरुभयथाभाव उपपन्नः; तल्लक्षणार्थोपलब्धेः सा गतिर्लक्षणं कारणं यस्य सगुणविद्याफलस्य पर्यङ्कस्थब्रह्मप्राप्तिरूपस्य स तल्लक्षणार्थः, तस्य श्रुतिषूपलब्धेः। अतः सगुणविद्यायां मार्गः

अर्थवान्, न निर्गुणविद्यायाम्। लोकवत् यथा लोके सेतुवासिनां गङ्गाप्राप्त्यर्थं मार्गोऽपेक्षितः न गङ्गास्थानाम्, तद्वदित्यर्थः॥

पूर्वं सगुणनिर्गुणविद्यासु मार्गस्य भावाभावव्यवस्था यथा उक्ता, तथा सगुणविद्यास्वपि व्यवस्थास्त्विति दृष्टान्तसंगत्येदमाह—

**अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम्॥ ३१॥**

अत्र पूर्वपक्षे नियतस्य मार्गस्यानुपसंहारः, सिद्धान्ते तु नियतस्योपसंहार इति फलभेदः। सगुणोपासनेषु क्वचित् पञ्चाग्न्युपासनादिषु मार्गः श्रूयते, क्वचित्तु वैश्वानरादिषु न श्रूयते। तत्र किं येषु मार्गः श्रुतः तेषामेव तस्य नियमः, किं वा सर्वेषामनियम इति संदेहे, विद्याविशेषप्रकरणान्नियम इति पूर्वः पक्षः। सिद्धान्तस्तु— सर्वेषां सगुणोपासनानां मार्गस्यानियमः। ननु अनियमाभ्युपगमे प्रकरणविरोधः; नैषोऽस्ति विरोधः। कुतः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्याम्; 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति' इत्याद्या श्रुतिः, 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्ययावर्तते पुनः' इत्याद्या स्मृतिः,

१८. अनियमाधिकरणम्।

ताभ्यामित्यर्थः । एवं च पञ्चाग्निविदामिव विद्यान्तरशीलिनामप्यविशेषेण अर्चिरादिमार्गप्रतिपादकवाक्येन प्रकरणं बाध्यमिति बोध्यम् ॥

पूर्वं मुक्तिफलत्वान्निर्गुणविद्यायां मार्गो निरर्थकः, ब्रह्मलोकप्राप्तिफलत्वात्सगुणविद्यायां मार्गः सर्वत्रार्थवानिति व्यवस्था कृता ; सा न युक्ता, निर्गुणविदामपि इतिहासादौ पुनर्जन्मदर्शनेन निर्गुणविद्यायाः मुक्तिसाधनत्वासंभवादित्याक्षेपसंगत्येदमाह—

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

अत्र पूर्वपक्षे निर्गुणविद्यायाः कैवल्याहेतुत्वान्मार्गोपसंहारः, सिद्धान्ते तस्यास्तद्धेतुत्वध्रौव्यात्तदनुपसंहार इति फलभेदः ।

१९. यावदधिकाराधिकरणम् । 'अपान्तरतमा नाम कलिद्वापरयोः सन्धौ विष्णुनियोगात् कृष्णद्वैपायनः संबभूव' इत्यादिना अपान्तरतमवसिष्ठादीनां निर्गुणब्रह्मविदां पुनर्जन्म स्मर्यते। तत्र किं विदुषो वर्तमानदेहपातानन्तरं देहान्तरप्राप्तिरस्ति, न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— अपान्तरतमःप्रभृतीनाम् आधिकारिकाणां लोकव्यवस्थाहेतुष्वधिकारेषु परमेश्वरेण नियुक्तानां सम्यग्दर्श-

नतः प्रक्षीणकर्मणां यावदधिकारमवस्थितिः यावत्प्रारब्धकर्म अवस्थितिः, तस्य प्रारब्धकर्मणो भोगेन क्षये प्रतिबन्धकान्तराभावादप्रतिबन्धसाक्षात्कारो वर्तमानदेहपातानन्तरं कैवल्यं संपादयतीति न देहान्तरप्राप्तिरिति सिद्धम् ॥

पूर्वं यथा आधिकारिकपुरुषाणामारब्धकर्मवशादेव देहान्तरारम्भसिद्धेः न संचितकर्मान्तरस्य तद्धेतुत्वमित्युक्तम् , तथेहापि तत्तद्वाक्योक्तैरेव निषेधैरुपलक्षणतया सर्वद्वैतनिषेधसिद्धेर्न शाखान्तरीयनिषेधानां ब्रह्मधीहेतुत्वमिति दृष्टान्तसंगत्येदमाह—

२०. अक्षरध्यधिकरणम् ।

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥

अत्र पूर्वपक्षे श्रुतैरेव निषेधैरुपलक्षणतया सर्वनिषेधे निर्विशेषब्रह्मप्रमितौ लाघवम् , सिद्धान्ते तु उपलक्षणैकदेशपरिशेषौ परित्यज्य निर्विशेषप्रमितौ नैराकाङ्क्ष्यमिति फलभेदः । बृहदारण्यके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु....' इत्यादि ; एवमाथर्वणे अक्षरमुपक्रम्य '....यत्तदद्रेश्यमग्राह्यम्....' इत्यादि । तत्र किं क्वचिन्निषेधश्रुतौ अश्रुतनिषेधानां श्रुत्यन्तरादुपसंहारोऽस्ति न वेति संदेहे, नास्तीति पूर्वः पक्षः । सि-

द्धान्तस्तु—अक्षरे ब्रह्मणि द्वैतनिषेधधियोऽक्षरधियः तासां सर्वत्र निषेधश्रुतिष्ववरोध उपसंहारो न्याय्यः । कुतः, सामान्यतद्भावाभ्यां द्वैतनिरासेन ब्रह्मप्रतिपादनस्य सर्वत्र सामान्यं समानत्वम्, तस्य ब्रह्मणः प्रतिपाद्यस्य सर्वत्रभावः एकत्वेन प्रत्यभिज्ञायमानत्वम्, ताभ्यां हेतुभ्यामित्यर्थः; तत्र दृष्टान्तः—औपसदवत्। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितानामौपसदानामध्वर्युकर्तृकपुरोडाशशेषाणां मन्त्राणां यत्र क्वचिच्छ्रुतानामपि अध्वर्युणा संबन्धः, तथा अक्षरप्रमितिशेषाणां निषेधानां यत्र क्वचिच्छ्रुतानामप्यक्षरेण सर्वत्र संबन्ध इत्यर्थः । तदुक्तं जैमिनिना प्रथमे काण्डे—'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' इति ॥

पूर्वं वेद्यस्याक्षरस्यैक्ये विद्यैक्यात् अक्षरधियामुपसंहार उक्तः । तर्हि इह 'द्वा सुपर्णा' इति वाक्ये एकस्यैव भोक्तृत्वम्, 'ऋतं पिबन्तौ' इति वाक्ये उभयोरपीत्युभयत्र वेद्यभेदाद्विद्याभेद इति प्रत्युदाहरणसंगत्येदमाह—

### इयदामननात् ॥ ३४ ॥

अत्र पूर्वपक्षे विद्याभेदादन्योन्यं गुणानुपसंहारः, सिद्धान्ते तदभेदादुपसंहार इति फलभेदः । आथर्वणे 'द्वा सुपर्णा सयुजा' इत्यादिमन्त्रः श्रूयते; काठकेऽपि 'ऋतं पिबन्तौ'

इत्यादि। तत्र किमनयोर्मन्त्रयोर्विद्याभेदः, उताभेद इति विशये, विद्याभेद इति पूर्वः पक्षः। सिद्धान्तस्तु— मन्त्रद्वये विद्याया: अभेद एव। कुतः, इयतः इयत्तावच्छिन्नस्य द्वित्वावच्छिन्नस्योभयत्राप्यभिन्नत्वेन आमननात् अभिधानादित्यर्थः। अत्र हि मन्त्रद्वये भोक्तृत्वानुवादेन परमात्माभेदः प्रतिपाद्यः। 'पिबन्तौ' इति प्रयोगस्तु भोक्तृजीवसाहचर्यात् अभोक्तरीश्वरे 'छत्रिणो गच्छन्ति' इतिवदुपपद्यत इत्यविरोधः॥

२१. इयदधिकरणम्।

पूर्वं पिबन्तावित्यस्य पदस्य लाक्षणिकत्वेन वेद्यैक्याद्विद्यैक्यमभाणि, इह तु वेद्याभेदेऽपि न विद्याभेदः, 'समिधो यजति' इत्यादौ यजत्यभ्यासवदात्माभ्यासादिति प्रत्युदाहरणसंगत्येदमाह—

**अन्तरा भूतग्रामवत्स्वात्मनः॥ ३५॥**

अत्र पूर्वपक्षे मिथो धर्मानुपसंहारः, सिद्धान्ते तूपसंहार इति फलभेदः। बृहदारण्यके— 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः' इति द्विराम्नायते। तत्र किमनयोर्ब्राह्मणयोर्विद्याभेदः, उत विद्यैक्यमिति विशये, विद्याभेद इति पूर्वः पक्षः। सिद्धान्तस्तु— आमननात् इति पदस्यानुषङ्गः; ब्राह्मणद्वयेऽपि स्वात्मनः स-

२२ अन्तरत्वाधिकरणम्।

र्वान्तरत्वामननात् विद्यैक्यं विज्ञेयम्; एकस्मिन्देहे द्वयोर्मुख्यतः सर्वान्तरत्वायोगात्। भूतग्रामवत् यथा भूतसमूहात्मकस्थूलदेहे पृथिव्यपेक्षया जलमान्तरं जलापेक्षया तेज इत्यादिक्रमेणापेक्षिकं भूतानामान्तरत्वम्, न मुख्यम्; तद्वत्। अथवा 'एको देवः सर्वभूतेषु गूढः' इत्यादिश्रुत्यन्तरे सर्वेषु भूतग्रामेषु सर्वान्तर एक एव आत्माम्नायते, तद्वदनयोर्ब्राह्मणयोरित्यर्थः। एवं च वेद्यैक्याद्विद्यैक्यमिति सिद्धम् ॥

पूर्वपक्षमनूद्य दूषयति—

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

अन्यथा विद्याभेदानङ्गीकारे आम्नानभेदस्याभ्यासस्य अनुपपत्तिः प्रयोजनाभावादिति चेत्, न। उपदेशान्तरवत् अभ्यासस्योपपत्तिः। तथाहि—यथा छान्दोग्ये 'तत्त्वमसि' इत्युपदेशे नवकृत्वोऽभ्यस्यमानेऽपि न विद्या भिद्यते, उपक्रमोपसंहारयोरविशेषात्; तद्वत् ब्राह्मणद्वयेऽपि प्रश्नरूपोपक्रमस्य 'अतोऽन्यदार्तम्' इत्युपसंहारस्य चाविशेषान्न विद्याभेद इति सिद्धम् ॥

पूर्वं यथा अभ्यासस्यादरार्थत्वेन मतेरैक्यमवादि, तथा व्यतिहारोपदेशस्याप्यादरार्थत्वान्मतेरेकरूपत्वमस्त्विति दृष्टान्तसंगत्येदमाह—

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

अत्र पूर्वपक्षे मतेरैकरूप्ये लाघवम्, सिद्धान्ते मतेर्द्वैरूप्ये व्यतिहारसार्थक्यमिति फलभेदः। ऐतरेयके श्रूयते—'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इति।

२३. व्यतिहाराधिकरणम्। तत्र किं व्यतिहारेण मतिरेकरूपा विधीयते, उत द्विरूपेति विशये, एकरूपेति पूर्वः पक्षः। सिद्धान्तस्तु— व्यतिहारोऽत्रोपासनार्थमुपदिश्यते। इतरवत् यथा इतरे सर्वात्मत्वादयो गुणा उपासनार्थमुपदिश्यन्ते, तद्वत्। तथाहि विशिंषन्ति समाम्नातारः 'त्वमहमस्म्यहं च त्वमसि' इत्युभयोश्चारणेन। तच्च विशेषणं द्विरूपायां मतौ कर्तव्यायामर्थवद्भवति। अन्यथा हीदं विशेषणोभयाम्नानमनर्थकं स्यात्। अतो मतिर्द्विरूपैवेति सिद्धम् ॥

पूर्वं जीवब्रह्मणोर्व्यतिहारोक्तिभेदाद्विद्याद्वैरूप्यं यथा अभ्यधायि, तथेहापि सत्यविद्यायाम् 'लोकाञ्जयति' इति तदनन्तरविद्यायाम् 'हन्ति पाप्मानम्' इति उभयत्र लोकजयपापनिवृत्तिरूपफलोक्तिभेदाद्विद्याभेद इति दृष्टान्तसंगत्येदमाह—

## सैव हि सत्यादयः ॥ ३८ ॥

अत्र पूर्वपक्षे गुणानामनुष्ठानव्यवस्था, सिद्धान्ते तु अनुष्ठानैक्यमिति फलभेदः। बृहदारण्यके श्रूयते—'महद्यक्षं

प्रथमजं वेद सत्यं ब्रह्म' इति सत्यविद्यां विधाय तदनन्तरम् 'तद्यत्तत्सत्यमसौ स आदित्यः' इत्यादि। तत्र सत्यविद्यातस्तदनन्तरविद्या भिद्यते न वेति संदेहे, भिद्यत इति पूर्वः पक्षः। सिद्धान्तस्तु— इयमनन्तरविद्या सैव सत्यविद्यैव, न ततो भिद्यते। कुतः, हिशब्दो हेतौ; तद्यत्तत्सत्यमिति प्रकृतस्यैवोपास्यस्य हिरण्यगर्भस्य आकर्षणाद्धेतोः, न ह्युपास्याभेदे विद्याभेदो युक्तः। न च फलभेदाद्विद्याभेदो युक्त इति वाच्यम्, सत्यविद्याप्रकरणे पठितस्य फलस्य सर्वस्यापि सत्यविद्याफलत्वात्। अतो विद्यैक्यात्पूर्वापरवाक्यस्थाः सर्वे सत्यादयो गुणा उपसंहर्तव्या इति सिद्धम्॥

२४. सत्याद्यधिकरणम्।

पूर्वं वेद्याभेदेन विद्यैक्यात् गुणोपसंहार इत्यभाणि। तर्ह्यत्रापि छान्दोग्ये दहराकाशस्यैवोपास्यत्वात्। वाजसनेयके तु आकाशविशिष्टस्य आत्मनो ज्ञेयत्वाद्वेद्यभेदेन सगुणनिर्गुणविद्ययोर्भेदान्नोपसंहार इति प्रत्युदाहरणसंगत्येदमाह—

**कामादीतरत्र तत्र चायतनादिभ्यः॥ ३९॥**

अत्र पूर्वपक्षे क्वचिदाकाशस्य ध्येयत्वं क्वचित्तदाश्रयस्य ज्ञेयत्वमिति विशेषसिद्धिः, सिद्धान्ते ब्रह्मण एवाकाशशब्दितत्वाद्गुणविशेषासिद्धिरिति फलभेदः। छान्दोग्ये 'दहरो-

ऽस्मिन्नन्तर आकाशः' इति श्रुतस्य दहराकाशस्य सत्यकाम-

२५. कामाद्यधिकरणम् ।

त्वादयो गुणा आम्नाताः । बृहदारण्यके तु 'य एषोऽन्तर्हृदय आकाशः' इत्यभिहितस्याकाशाश्रयस्य सर्ववशित्वादयो गुणाः । ते परस्परमुपसंहर्तव्याः, न वेति संदेहे, नोपसंहर्तव्या इति पूर्वः पक्षः । सिद्धान्तस्तु—कामादि सत्यकामत्वादिगुणजातम् इतरत्र बृहदारण्यके उपसंहर्तव्यम् । यच्च सर्ववशित्वादिकम्, तदपि तत्र छान्दोग्ये उपसंहर्तव्यम् । कुतः, आयतनादिभ्यः उभयत्राविशिष्टेभ्यो हृदयायतनसेतुत्वव्यपदेशादिभ्यो हेतुभ्यः । ननु एवं वेद्याभेदेऽपि सगुणनिर्गुणत्वेन विद्ययोर्भेदात् कथमुपसंहार इति चेत्, बाढम्; न वयमुपासनार्थमुपसंहारं ब्रूमः, अपि तु विद्यास्तुत्यर्थम्; येन विद्याभेदे गुणोपसंहारो न स्यात् । अतो न काचनानुपपत्तिरिति ॥

पूर्वं विद्याभेदेऽपि स्तुत्यर्थत्वेन गुणोपसंहारो यथा अभ्यधायि, तथा भोजनलोपेऽपि पूर्वभोजनस्तुत्युपपत्त्यर्थं प्राणाग्निहोत्रालोप इति दृष्टान्तसंगत्येदमाह—

## आदरादलोपः ॥ ४० ॥

अत्र पूर्वपक्षे प्रतिनिधिन्यायेन प्राणाग्निहोत्रकर्तव्यतावश्यकत्वम्, सिद्धान्ते तदनवतारात्तदनावश्यकत्वमिति फलभेदः ।

छान्दोग्ये वैश्वानरविद्यायां प्राणाग्निहोत्रं श्रूयते— 'स यां

२६. आदरा- प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय
धिकरणम्। स्वाहा' इत्यादिना। तत्र किं भोजनलोपे प्राणाग्निहोत्रस्य लोपः, उतालोप इति संदेहे, भोजनलोपेऽग्निहोत्रस्यालोपः। कुतः, 'पूर्वोऽतिथिभ्योऽश्नीयात्' इति जाबालश्रुत्या पूर्वभोजनस्य प्राथम्यरूपधर्मलोपमसहमानया प्राणाग्निहोत्रे आदरकरणात्; न हि धर्मलोपमसहमाना श्रुतिः धर्मिणः प्राणाग्निहोत्रस्य लोपं सहते। अतोऽलोप इति पूर्वः पक्षः॥

सिद्धान्तस्तु—

**उपस्थितेऽतस्तद्वचनात्॥ ४१॥**

भोजने चोपस्थिते अतः अस्मादेव भोजनद्रव्यात् प्राणाग्निहोत्रं कर्तव्यम्; अनुपस्थिते त्वग्निहोत्रस्य लोप एव। कुतः, तद्वचनात् 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति वचनात्। आदरवचनं तु भोजनप्रसक्तिदशायां द्रष्टव्यम्॥

पूर्वमनित्यभोजनाश्रितप्राणाग्निहोत्रस्यानित्यत्वं यथा, तद्वत् नित्यकर्माङ्गाश्रितोपासनानां नित्यत्वमिति दृष्टान्तसंगत्येदमाह—

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्॥ ४२॥**

अत्र पूर्वपक्षे उपासनानां क्रतुषु पर्णतादिवदावश्यकत्वम्, सिद्धान्ते गोदोहनवदनावश्यकत्वमिति फलभेदः । तत्र सन्ति कर्माङ्गोद्गीथव्यपाश्रयाणि प्राणाद्युपासनानि । किं तेषां नित्यवदनुष्ठानम्, उत नेति संदेहे, नित्यवदनुष्ठानमिति पूर्वः पक्षः । सिद्धान्तस्तु—तेषां कर्माङ्गाश्रितानां निर्धारणानाम् उपासनानाम् अनियमः नित्यवदनुष्ठानाभावः । कुतः, तद्दृष्टेः तस्य अनियमस्य 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' इति श्रुतौ दर्शनात् । उपासनानां पृथक्फलश्रवणादपि न नित्यवदनुष्ठानमित्याह— पृथग्ध्यप्रतिबन्धः फलम् । हि यस्मात् कर्मफलतः पृथगेवाप्रतिबन्धः 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति वीर्यवत्तरत्वात्मकर्मसमृद्धिरूपं फलं लभ्यते । अतो न कर्माङ्गत्वमुपासनानामिति सिद्धम् ॥

२७. तन्निर्धारणाधिकरणम् ।

पूर्वं फलभेदात् कर्माङ्गानां तदाश्रितोपासनानां च नित्यत्वानित्यत्वलक्षणः प्रयोगभेदोऽभाणि । तर्ह्यत्र वायुप्राप्तिलक्षणफलैक्याद्वायुप्राणयोः स्वरूपाभेदाद्ध्यानप्रयोगाभेद इति प्रत्युदाहरणसंगत्येदमाह—

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

अत्र पूर्वपक्षे विद्यैक्यात् प्रयोगभेदासिद्धिः, सिद्धान्ते

तदैक्येऽपि गुणभेदतस्तत्सिद्धिरिति फलभेदः। बृहदारण्यके
२८. प्रदानाधि- छान्दोग्ये च संवर्गविद्यायां वागादिभ्यः
करणम्। प्राणः श्रेष्ठः अग्न्यादिभ्यो वायुः श्रेष्ठः
इत्यवधारितम्। तत्र किमस्यां विद्यायां वायुप्राणयोः प्रयोगैक्यम्, उत प्रयोगभेद इति संदेहे, प्रयोगैक्यमिति पूर्वः पक्षः। सिद्धान्तस्तु—प्रदानवदेव। यथा 'इन्द्राय राज्ञे पुरोडाशमेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इति इन्द्रदेवताया एकत्वेऽपि राजाधिराजादिगुणभेदेन तद्विशिष्टदेवताभेदात् पुरोडाशानां प्रदानस्य प्रक्षेपस्य भेदः; तद्वदेकस्यामपि विद्यायां वायुप्राणयोः स्वरूपाभेदेऽप्याध्यात्मिकाधिदैविकत्वरूपावस्थाभेदेन गुणभेदात् प्रयोगभेद इति। तदुक्तं देवताकाण्डे 'नाना वा देवता पृथग्ज्ञानात्' इति॥

पूर्वमेकप्रयोगायोगाद्वायुप्राणयोः प्रयोगभेदो गदितः; तर्हि मनश्चिदादीनां प्रकरणात् कर्माङ्गत्वेन एकप्रयोगसंभवात् प्रयोगाभेद इति प्रत्युदाहरणसंगत्येदमाह—

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि॥ ४४॥

अत्र पूर्वपक्षे क्रियार्थानामग्नीनां क्रियाङ्गत्वम्, सिद्धान्ते पुमर्थानां तेषां केवलविद्यामयत्वमिति फलभेदः। वाजसनेयके अग्निरहस्ये 'तत्षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीन-

कोन्मनोमयान्मनश्चितः’ इत्यादि ; तथैव वाक्चितः ‘प्राण-चितः’ इत्यादि मनश्चिदादयः अग्नयः श्रूयन्ते । तत्र किमेते कर्माङ्गभूताः, उत स्वतन्त्रा इति संदेहे, कर्माङ्गभूता इति पूर्वः पक्षः । सिद्धान्तस्तु– एते स्वतन्त्रा एव । कुतः, लिङ्गभूयस्त्वात् ‘यत्किंचेमानि भूतानि मनसा संकल्पयन्ति’ इत्यादि-स्वातन्त्र्यज्ञापकलिङ्गानां भूयसां सत्त्वात् ; तद्धि लिङ्गं प्रकरणाद्बलीयः ; तदपि बलीयस्त्वमुक्तं पूर्वकाण्डे ‘श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्’ इति ॥

२९. लिङ्गभूयस्त्वाधिकरणम् ।

इत्थं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

**पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥**

संकल्पात्मका मनश्चिदादयोऽग्नयः न स्वतन्त्राः ; किं तु ‘इष्टकाभिरग्निं चिनुते’ इति प्रकृतस्य पूर्वस्य क्रियामयस्याग्नेः अयं विकल्पः संकल्पात्मकोऽग्निः, प्रकरणात् ; क्रिया क्रियामय एव स्यात् । न च लिङ्गादग्नीनां स्वातन्त्र्यम् । तस्य लिङ्गस्य मानसिकाग्निस्तुतिपरत्वेन विध्येकवाक्यतया स्वार्थपरत्वाभावात् न प्रकरणबाधकत्वम् । तस्मात्क्रियानुप्रवेशिन

एतेऽग्नयः। मानसवत् यथा द्वादशाहे 'मनोग्रहं गृह्णामि' इति श्रुतं मानसग्रहं द्वादशाहमध्यपातिनो दशमस्याह्नोऽङ्गम्, तथेमेऽग्नयः प्रकृतकर्मशेषा इत्यर्थः॥

किं च—

**अतिदेशाच्च॥ ४६॥**

मानसिकाग्नीनां मध्ये 'एकैक एव तावान्यावानसौ पूर्वः' इति पूर्वेणेष्टकाचितेनाग्निना संपादिकाग्नीनां सादृश्योपदेशाच्च तच्छेषत्वमित्यर्थः॥

इत्थं पूर्वपक्षे सिद्धान्तयति—

**विद्यैव तु निर्धारणात्॥ ४७॥**

तुः पूर्वपक्षनिरासार्थः। विद्यात्मका एते मनश्चिदादयः स्वतन्त्रा एव, न कर्मानुप्रवेशिनः। कुतः, 'ते हैते विद्याचित एव' इत्यवधारणादित्यर्थः। एवकारश्रुत्या कर्मप्रकरणं बाध्यमिति भावः॥

किं च लिङ्गादपि बाध्यमित्याह—

**दर्शनाच्च॥ ४८॥**

मनश्चिदादीनां स्वातन्त्र्यज्ञापकलिङ्गस्य प्रागुक्तस्य दर्शनाच्चेत्यर्थः॥

किं च वाक्यादपि तद्बाध्यमित्याह—

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥**

आदिशब्देन लिङ्गवाक्ययोर्ग्रहणम् । श्रुतिलिङ्गे प्रागुक्ते । 'विद्यया हैवैत एवंविदश्चिता भवन्ति' इत्येतद्वाक्यं मनश्चिदादीनां स्वातन्त्र्यं बोधयत्प्रकरणं बाधयति । तथा चैतेषां श्रुतिलिङ्गवाक्यानां बलीयस्त्वात् दुर्बलेन कर्मप्रकरणेन न मनश्चिदादीनां स्वातन्त्र्यबाध इत्यर्थः । यत्तु लिङ्गस्य स्तुतिपरत्वम्, तन्न; तस्य विधिप्रत्ययसामीप्याभावात अपूर्वार्थविधायकत्वादित्यर्थः ॥

इतोऽपि मनश्चिदादीनां स्वातन्त्र्यमित्याह—

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५० ॥**

'ते मनसैवाधीयन्त मनसाचीयन्त मनसैव ग्रहा अगृह्यन्त' इत्यादिना मनआदिषु वृत्तिषु कर्माङ्गानामनुबन्धात् संपादनात् अग्नीनां स्वातन्त्र्यम, कर्माङ्गत्वे अङ्गानां प्रत्यक्षसिद्धत्वेन संपादनवैयर्थ्यात् । आदिशब्देनातिदेशो गृह्यते । यत्तु अयमतिदेशः पूर्वपक्षानुकूल इति, तन्न; अग्नित्वसादृश्येनातिदेशस्य सिद्धान्तेऽप्युपपत्तेः । सूत्रे बहुवचनसिद्ध्यर्थं पूर्वोक्तश्रुतिलिङ्गादिकं बोध्यम् । एवं च अनुबन्धादिभ्यो हेतुभ्यः

स्वातन्त्र्यं मनश्चिदादीनाम् । प्रज्ञान्तरपृथक्त्ववत् यथा प्रज्ञान्तराणां शाण्डिल्यादिविद्यानां स्वातन्त्र्यं तद्वत् । ननु मनश्चिदादीनां स्वातन्त्र्ये कर्मप्रकरणादुत्कर्षः क्व दृष्ट इत्यत आह——

**दृष्टश्च** । राजसूयं प्रस्तुत्य श्रुताया अवेष्टेः ब्राह्मणादिकर्तृकाया राजमात्रकर्तृकराजसूयप्रकरणात् उत्कर्षो दृष्टः, तद्वदिहापि अग्नीनां कर्मप्रकरणादुत्कर्ष इति । तदुक्तं प्रथमे काण्डे— 'क्रत्वर्थायामिति चेन्न वर्णत्रयसंयोगात्' इति ॥

यदवादि पूर्ववादिना मानसवन्मनश्चिदादीनां क्रियाशेषत्वमिति तद्विघटयति—

**न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ५१ ॥**

मनश्चिदादीनां मानसत्वसामान्यादपि न क्रियाशेषत्वं कल्प्यम्, उक्तश्रुत्यादिभ्यः स्वातन्त्र्योपलब्धेः । मृत्युवत् यथा 'स एष एव मृत्युर्य एष एतस्मिन्मण्डले पुरुषः' इति 'अग्निर्वै मृत्युः' इति चाग्न्यादित्यपुरुषयोः समानेऽपि मृत्युशब्दप्रयोगे नात्यन्तसाम्यापत्तिः, यथा वा 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्' इत्यादौ समिदादिसाम्यान्न द्युलोकस्याग्नित्वापत्तिः, अपि तु परस्परवैषम्यम्; तद्वत् मानसमानसिकाग्न्योर्मानसत्वसाम्येऽपि परस्परवैषम्यमित्यर्थः ॥

पूर्वोत्तरब्राह्मणयोः स्वतन्त्रविद्याविधानात् मध्यस्थस्यापि ब्राह्मणस्यास्य स्वतन्त्रविद्याविधिपरत्वमाह—

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वा-त्त्वनुबन्धः ॥ ५२ ॥**

मानसिकाग्निब्राह्मणात् परेण ब्राह्मणेन शब्दस्य ताद्विध्यं चित्यग्नौ लोकदृष्टिरूपस्वतन्त्रविद्याविधित्वमेव प्रतीयते । चकारात् पूर्वेणापि ब्राह्मणेन मण्डलपुरुषोपास्तिरूपस्वतन्त्र-विद्याविधित्वमेव दृश्यते । तत्सांनिध्यात् मध्यस्थेनापि ब्राह्म-णेन मानसाग्नीनां स्वतन्त्रविद्यात्वं बोध्यम् । ननु तर्हि कस्मा-त्क्रियाग्निना सहपाठ इत्यत आह— भूयस्त्वात्त्वनुबन्धः । तुः शङ्कानिरासार्थः; कर्माङ्गानां मानसाग्निविद्यायां संपाद्यानां बहुत्वात् विद्यायाः क्रियाग्निनानुबन्धः सहपाठः । तस्मादियं मानसाग्निविद्या स्वतन्त्रपुरुषार्थहेतुरिति सिद्धम् ॥

ननु विद्यायाः पुरुषार्थहेतुत्वमयुक्तम्, देहादिव्यतिरिक्तस्य पुरुषस्याभावादित्याक्षेपसंगत्येदमाह—

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥**

प्रसङ्गादस्य पादसंगतिर्बोध्या । फलं तु पूर्वपक्षे देहादिव्य-तिरिक्तात्माभावात् स्वर्गापवर्गादिशास्त्रवैयर्थ्यम्, सिद्धान्ते

तत्सार्थक्यमिति फलभेदः। अत्र आत्मा विषयः; स किं देह एव, उत तदतिरिक्त इति संशये, तत्रैके लोकायतिकाः शरीरातिरिक्तस्य आत्मनोऽसत्त्वं मन्यमानाः शरीरमेवात्मेत्याचक्षते। कुतः, शरीरेऽस्तीत्युपलब्धेर्भावात्, तदभावे चाभावादित्यन्वयव्यतिरेकाभ्यां तस्याः शरीरधर्मत्वेनातिरिक्तात्मासिद्धेरिति पूर्वः पक्षः॥

३०. एकात्म्याधिकरणम्।

सिद्धान्तस्तु—

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥ ५४॥**

न त्वात्मनः शरीरादव्यतिरेकः, किं तु व्यतिरेक एव। कुतः, तस्य शरीरस्य मरणावस्थायां भावेऽप्युपलब्धिरूपात्मधर्मस्याभावित्वात्, पतने च तस्य शरीरस्य शरीरान्तरावच्छेदेन तद्धर्मस्य भावित्वात्, न शरीरधर्मत्वम्। उपलब्धिवत् यथा भूतोपलब्धिर्न तद्धर्मः ततो व्यतिरिच्यते, तथा भौतिकदेहोपलब्धिः न तद्धर्मः ततो व्यतिरिच्यते। सैवोपलब्धिरस्माकमात्मेति देहव्यतिरिक्तस्यात्मनः सत्त्वमिति सिद्धम्॥

पूर्वं यथा शरीरात्मनोर्भेदात् आत्मधर्मस्य शरीरे न संभवः, तद्वत् एकशाखागतोद्गीथाद्यपेक्षया शाखान्तरगतोद्गीथादेः स्वरभेदेन भेदादेकशाखागतोद्गीथादिधर्माणां शाखान्तर-

गतोद्गीथादौ न संभव इति दृष्टान्तसंगत्येदमाह—

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** ॥ ५५ ॥

अत्र पूर्वपक्षेऽनुष्ठानव्यवस्था, सिद्धान्ते तदव्यवस्थेति फलभेदः। सन्ति कर्माङ्गाश्रिता उपासनाः, उद्गीथावयवे ओंकारे प्राणदृष्टिः, उद्गीथे पृथिवीदृष्टिः, पञ्चविधे साम्नि पृथिव्यादिदृष्टिः इत्येवमाद्याः। ताः किं यत्र शाखायां विहिताः तच्छाखागतोद्गीथाद्यालम्बनाः, उत सर्वशाखागतोद्गीथाद्यालम्बना इति विशये, तच्छाखागतोद्गीथाद्यालम्बना इति पूर्वः पक्षः। सिद्धान्तस्तु— सौत्रतुशब्दः पूर्वपक्षव्यावृत्त्यर्थः; अङ्गावबद्धाः अङ्गाश्रिताः एता उपासनाः प्रतिवेदं स्वस्वशाखासु विद्यमानोद्गीथाद्यालम्बना एव न भवन्ति, किं तु शाखान्तरीयोद्गीथाद्यालम्बना अपि। कस्मात्, हिशब्दो हेतौ, 'उद्गीथमुपासीत' इत्यादावुद्गीथादिश्रुतेरविशेषाद्धेतोरित्यर्थः ॥

इममर्थं दृष्टान्तमुखेनापि स्पष्टयति—

**मन्त्रादिवद्वाविरोधः** ॥ ५६ ॥

एकशाखाविहितोद्गीथादीनां शाखान्तरगतोद्गीथादिषु प्राप्तेरविरोधः। मन्त्रवत् यथा तण्डुलपेषणार्थमश्मादानमन्त्रस्य

३१. अङ्गावबद्धाधिकरणम्।

'कुटरुरसि' इत्येकत्राम्नातस्य शाखान्तरेऽपि प्राप्तेरविरोधः, तद्वत्। वाशब्दः दृष्टान्तप्रदर्शनरूपहेत्वन्तरसूचनार्थः ॥

पूर्वं यथा उद्गीथादिश्रुत्या संनिधिप्राप्तव्यवस्थां बाधित्वोद्गीथाद्युपास्तीनां सर्वशाखासु व्यवस्था स्थापिता, तद्वदिहापि व्यवस्था व्यस्तोपास्तीनां विधिश्रुत्या समस्तोपास्तिसंनिधिप्राप्तस्तुत्यर्थत्वं बाधित्वेति दृष्टान्तसंगत्येदमाह—

## भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ५७ ॥

अत्र पूर्वपक्षे वाक्यभेदः, सिद्धान्ते तदैक्यमिति फलविवेकः। वैश्वानराख्यायिकायां द्युलोकसूर्यवाय्वादिषु व्यस्तेषु तथा समस्तेष्वपि मूर्धचक्षुःप्राणादिषु वैश्वानरोपास्तिः श्रुता। सा किमिहोभयथाप्युपास्तिर्विवक्षिता, उत समस्तोपास्तिरेवेति विशये, उभयथोपास्तिरिति पूर्वः पक्षः। सिद्धान्तस्तु— भूम्नः समस्तोपासनस्यैवास्मिन्वाक्ये ज्यायस्त्वं प्राधान्येन प्रतिपाद्यत्वम्, न व्यस्तोपास्तीनामपि। क्रतुवत् यथा दर्शपूर्णमासादेः क्रतोः साङ्गप्रधानस्यैकस्यैव प्रयोगो विवक्ष्यते, न व्यस्तानामपि प्रयाजादीनाम्, तद्वत्। ननु भूम्न एव ज्यायस्त्वं कस्मादित्यत आह— तथाहि दर्शयति। प्राचीनशालादिभि-

(३२. भूमज्यायस्त्वाधिकरणम्।)

रुक्तानि व्यस्तोपासनानि निन्दित्वा केकयेन राज्ञा समस्तोपासनस्योक्तत्वादेकवाक्यता श्रुतेरवगम्यते । एवं च एकवाक्यतामापन्नेयं श्रुतिर्भूम्न एव ज्यायस्त्वं दर्शयति । ननु 'कं त्वमात्मानमुपास्से' इत्यादिव्यस्तोपास्तिविधिश्रुतीनां का गतिरिति चेत्, न; व्यस्तोपासनानुवादेन समस्तोपासनस्य विधेयत्वादनुवादकत्वमेव गतिरिति । अतः समस्तोपासनमेव ज्याय इति सिद्धम् ॥

पूर्वं यथा व्यस्तोपास्तिषु विधिश्रुतीनां सत्त्वेऽपि समस्तोपास्तेरेव ज्यायस्त्वमुक्तम्, तथैकोपास्यकोपास्तिषु प्रत्येकं विधीनां सत्त्वेऽपि समस्तोपास्तेरेव ज्यायस्त्वमिति नास्ति विद्यानां भेद इति दृष्टान्तसंगत्येदमाह—

**नाना शब्दादिभेदात् ॥ ५८ ॥**

फलं पूर्ववत् । सन्ति सगुणब्रह्मैकवेद्याः शाण्डिल्यादिविद्याः, तथैव मुख्यप्राणविद्या अपि । ताः किं नाना, उत अभिन्ना इति विशये, अभिन्ना इति पूर्वः पक्षः । सिद्धान्तस्तु— विद्याः नानैव भिन्ना एव । कुतः, शब्दादिभेदात् 'वेद' 'उपासीत' 'क्रतुं कुर्वीत' इति शब्दभेदात् । आदिशब्देन उपास्यगुणभेदाच्चेत्यर्थः ॥

३३. शब्दादिभेदाधिकरणम् ।

पूर्वत्र विद्यानानात्वे सिद्धे किलायं विचारः प्रवर्तेत इति हेतुहेतुमद्भावसंगत्येदमाह—

## विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥

अत्र पूर्वपक्षे यथेष्टमनुष्ठानमित्यनियमः, सिद्धान्ते विकल्पेनानुष्ठानमिति नियम इति फलभेदः। याः सगुणब्रह्मविद्याः वेद्यसाक्षात्कारेण फलहेतवः, किं तासां विकल्पसमुच्चयाभ्यामनुष्ठानम्, उत विकल्प एवेति संशये, नियामकाभावात् स्वेच्छयैवेति पूर्वः पक्षः। सिद्धान्तस्तु—विकल्प एवासां विद्यानां युक्तः। कुतः, अविशिष्टफलत्वात् वेद्यसाक्षात्काराख्याभिन्नफलत्वादित्यर्थः ॥

३४. विकल्पाधिकरणम्।

पूर्वम् अहंग्रहोपास्तीनां विकल्पेनैवानुष्ठेयत्वमभाणि, तद्वदुपास्तित्वाविशेषात् प्रतीकोपास्तीनामपि विकल्पेनैवानुष्ठेयत्वं स्यादिति दृष्टान्तसंगत्येदमाह—

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ६० ॥

अत्र पूर्वपक्षे व्रीह्यादिष्विवानुष्ठानानियमसिद्धिः, सिद्धान्ते फलवशादनियम इति फलभेदः। याश्च प्रतीकोपास्तयो 'नाम ब्रह्मेत्युपासीत' इत्यादिकाः, तासु किं विकल्पः, उत

यथाकाममनुष्ठानमिति विशये, विकल्प एवेति पूर्वः पक्षः ।

३५. काम्याधिकरणम् । सिद्धान्तस्तु—काम्यास्तु अदृष्टद्वारा फलहेतवो विद्याः यथाकामं समुच्चीयेरन् वा न वा समुच्चीयेरन् । कुतः, पूर्वहेतोरविशिष्टफलत्वस्य विकल्पप्रयोजकस्यात्राभावादित्यर्थः ॥

पूर्वं यथा प्रतीकोपास्तीनां स्वतन्त्रत्वाद्यथाकाममनुष्ठानम् , न तथेहाङ्गाश्रितोपास्तीनाम् अङ्गतन्त्रत्वादिति प्रत्युदाहरणसंगत्येदमाह—

**अङ्गेषु यथाश्रयभावः** ॥ ६१ ॥

अत्र पूर्वपक्षे समुच्चयानुष्ठानात् फलबाहुल्यम् , सिद्धान्ते यथाकाममनुष्ठानात् प्रयोगसौकर्यमिति फलभेदः । याश्च कर्मा-

३६. यथाश्रयभावाधिकरणम् । ङ्गोद्गीथाश्रिताः विद्याः, तासु समुच्चयेनैवानुष्ठानम् , उत यथाकाममिति विशये, पूर्वः पक्षः—अङ्गेषु यथाश्रयभावः, यथा क्रतुषु आश्रितानामङ्गानां समुच्चित्यानुष्ठाननियमः, तथाङ्गेष्वाश्रितानामुपास्तीनाम् आश्रयभावः समुच्चित्यानुष्ठाननियम इत्यर्थः ॥

ननु तर्हि गोदोहनस्यापि समुच्चये नियमः स्यादित्यत आह—

**शिष्टेश्च** ॥ ६२ ॥

शिष्टेः शासनात् विधानात् विहितत्वाविशेषादङ्गवत्समुच्चय इत्यर्थः। गोदोहनस्य चमसे विहितत्वान्न समुच्चयानुष्ठाननियमः; उपास्तीनां तु कस्यचिदङ्गस्य स्थाने विहितत्वात्समुच्चयनियमो न विरुध्यत इति भावः ॥

समुच्चये लिङ्गमाह—

**समाहारात् ॥ ६३ ॥**

'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरति' इति ऋग्वेदोक्तप्रणवस्य सामवेदोक्तोद्गीथेनैक्योपास्तिबलादुद्गात्रा प्रमादाद्दुष्टस्यापि उद्गीथस्य सम्यक्कृतहोतृशंसनतः समाहारान्निर्दोषकरणादित्यर्थः। एवं च वेदद्वयोक्तप्रणवोद्गीथयोरैक्यज्ञानस्यैतादृशं फलं ब्रुवच्छान्दोग्यवाक्यं सर्ववेदोक्तानामप्यङ्गाश्रितोपास्तीनां संबन्धसामान्यात् समुच्चये लिङ्गमिति भावः ॥

लिङ्गान्तरमप्याह—

**गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥**

तेनोंकारेण वेदत्रयोक्तं कर्म भवतीत्युद्गीथोपास्तौ गुणभूतस्योपास्यस्योंकारस्य सर्वकर्मणि साधारण्यश्रवणात्तदाश्रितोपास्तीनामपि साधारण्यं समुच्चयानुष्ठानमित्यर्थः। यद्वा गुणसाधारण्यश्रुतेश्च यदि सर्वेषां कर्मगुणानाम् उद्गीथादीनां समुच्चित्यानुष्ठानात्मकसाधारण्यं न स्यात्, तर्हि तदाश्रितोपास्ती-

नामपि समुच्चित्यानुष्ठानं न स्यात् । न त्वेतदस्ति, प्रयोगवचनेन सर्वाङ्गग्राहिणां तेषां साधारण्यश्रवणात् । ततश्च तदाश्रितोपास्तीनामपि साधारण्यमित्यर्थः ॥

एवं पूर्वपक्षे सिद्धान्तः—

**न वा तत्सहभावाश्रुतेः ॥ ६५ ॥**

वाशब्दस्त्वर्थः पूर्वपक्षनिरासार्थः । न अङ्गाश्रितोपास्तीनां अङ्गवत्समुच्चयानियमः । कुतः, तत्सहभावाश्रुतेः 'ग्रहं वा गृहीत्वा' इत्यादिना यथाङ्गानां सहभावः श्रूयते, तद्वत् तासामुपास्तीनां सहभावस्याश्रुतेः । न चाङ्गतन्त्रत्वादुपास्तीनां समुच्चयनियम इति साम्प्रतम्, अङ्गतन्त्रस्यापि गोदोहनस्यानुष्ठानानियमादिति दिक् ॥

**दर्शनाच्च ॥ ६६ ॥**

'एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वाश्चर्त्विजोऽभिरक्षति' इति श्रुतावङ्गाश्रितोपास्तीनामसमुच्चयदर्शनादित्यतिशोभनम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां तृतीयाध्यायस्य

तृतीयः पादः ॥

---

ॐ

# चतुर्थः पादः ॥

इत्थं पूर्वस्मिन्पादे परापरब्रह्मविद्यानां गुणोपसंहारोक्त्या परिमाणमवधारितम् । इह तु तासां कर्मानपेक्षाणामेव पुरुषार्थसाधनत्वं निरूपयितुं तासां यज्ञादीनि बहिरङ्गानि शमादीन्यन्तरङ्गानि च निरूप्यन्ते इत्येकविद्याविषयकत्वलक्षणसंगत्या अयं चतुर्थः पाद आरभ्यते । पूर्वपादान्त्याधिकरणे कर्माङ्गविद्योक्ता, तत्प्रसङ्गात् ब्रह्मज्ञानस्य कर्माङ्गत्वमाशङ्क्य समाधत्त इति प्रसङ्गसंगत्येदमधिकरणमाह—

१. पुरुषार्थाधिकरणम् ।

## पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥

अत्र पूर्वपक्षे ज्ञानकर्मणोरङ्गाङ्गित्वेन समुच्चयः, सिद्धान्ते केवलज्ञानान्मुक्तिरिति फलभेदः । अत्र परब्रह्मविद्या विषयः ; सा किं कर्तृद्वारा क्रत्वनुप्रवेशिनी, उत स्वतन्त्रैव पुरुषार्थसाधिकेति विशये, क्रत्वनुप्रवेशिनीति पूर्वः पक्षः । सिद्धान्तस्तु—अतः अस्मादौपनिषदात्मज्ञानात् स्वतन्त्रात् पुरुषार्थो

मोक्षः सिद्ध्यतीति बादरायण आचार्यो मन्यते । कुतः, 'तरति शोकमात्मवित्' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादि-केवलविद्याया मोक्षहेतुत्वबोधकशब्दादित्यर्थः । इदमुपलक्षणं सगुणविद्यानामपि स्वातन्त्र्येण फलहेतुत्वं तत्तत्फलश्रुतेरिति बोध्यम् ॥

इत्थं सिद्धान्तमुपक्रम्य पूर्वपक्षयति—

**शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥**

कर्तृत्वेनात्मनः कर्मशेषत्वात्तज्ज्ञानमपि पर्णतावत् कर्मशेषात्मद्वारा क्रत्वङ्गम्, फलशून्यत्वे सति कर्माङ्गाश्रयत्वात् । ननु विशेषणासिद्धो हेतुः, 'तरति शोकमात्मवित्' इत्यादिफलश्रुतेरित्यत आह— पुरुषेत्यादि । यथा अन्येषु द्रव्यसंस्कारकर्मसु अपापश्लोकश्रवणादिफलश्रुतिरर्थवादः, तथात्रापि पुरुषार्थश्रुतिरर्थवाद इति जैमिनिराचार्यो मन्यते । ततश्च न हेतोर्विशेषणासिद्धिरिति भावः ॥

**आचारदर्शनात् ॥ ३ ॥**

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' इत्यादौ ब्रह्मविदां जनकादीनां विद्यया सह कर्माचारदर्शनात् विद्यायाः कर्माङ्गत्वमित्यर्थः ॥

किं च—

तच्छ्रुतेः ॥ ४ ॥

'यदेव विद्यया करोति....तदेव वीर्यवत्तरं भवति' इति तृतीयाश्रुत्या विद्यायाः, तस्य कर्मशेषत्वस्य, श्रवणादित्यर्थः ॥

किं च—

समन्वारम्भणात् ॥ ५ ॥

'तं विद्याकर्मणी समन्वारभेते' इति फलारम्भे विद्याकर्मणोः साहित्यदर्शनादपि विद्यायाः कर्माङ्गत्वमित्यर्थः ॥

किं च—

तद्वतो विधानात् ॥ ६ ॥

'आचार्यकुलाद्वेदमधीत्य' इत्यादिश्रुत्या सकलवेदार्थज्ञानवतः कर्मविधानादपि लिङ्गात् कर्माङ्गत्वं विद्याया इत्यर्थः ॥

किं च—

नियमाच्च ॥ ७ ॥

'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यादिकात् यावज्जीवं कर्माचारनियमाच्च ब्रह्मविद्यायाः कर्मशेषत्वमेवेत्यर्थः ॥

इत्थं षड्भिः सूत्रैः पूर्वपक्षे प्राप्ते, दशभिः सूत्रैः सिद्धान्तयति—

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥

तुः पूर्वपक्षनिरासार्थः । यदवादि पूर्ववादिना तत्त्वज्ञानं कर्माङ्गं फलशून्यत्वे सति कर्माङ्गाश्रयत्वादिति, तन्न ; हेतोर्विशेष्यासिद्धेः । कस्माद्विशेष्यासिद्धिः, अधिकोपदेशात् यः कर्मकर्ता तदङ्गभूतः सन् संसारी, तस्मादधिकस्याकर्तुरसंसारिणश्चिन्मात्रस्य वेदान्तेषूपदेशात् । ततश्च तत्त्वज्ञानं चिन्मात्राश्रयमेवेति भवति विशेष्यासिद्धिः । एवं च तत्त्वज्ञानफलश्रुतेर्नार्थवादत्वम् । तस्मात् एवं यन्मतं भगवतो बादरायणस्य तत्तथैवेति व्यवस्थितम् ; न चाधिकोपदेशासिद्धिरिति सांप्रतम् । तद्दर्शनात् तस्याधिकस्य चिन्मात्रस्य 'यः सर्वज्ञः सर्ववित्' इत्यादिश्रुतिसहस्रेषु दर्शनादित्यर्थः ॥

यदुक्तम् 'आचारदर्शनात्' इति तत्राह—

## तुल्यं तु दर्शनम् ॥ ९ ॥

तत्त्वज्ञानस्य कर्मशेषत्वाभावेऽपि आचारदर्शनं तुल्यमेव । 'एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे' इत्यादिका श्रुतिरात्मविदां कर्माचाराभावं दर्शयति । तुशब्देनाकर्माङ्गलिङ्गदर्शनस्य प्राबल्यं सूचितम् । जनकादीनां तु अहम-

भिमानाभावेन तत्कृतकर्मणोऽकर्मतया तदाचारदर्शनस्य दौर्बल्यमिति ध्येयम् ॥

यदुक्तम् 'तच्छ्रुतेः' इति तत्राह—

**असार्वत्रिकी** ॥ १० ॥

'यदेव विद्यया करोति' इति श्रुतिरसार्वत्रिकी सर्वविद्याविषया न भवति, प्रकृतोद्गीथविद्यामात्रपरत्वात्। ततश्च न श्रुतिबलात् ब्रह्मविद्यायाः कर्माङ्गत्वसिद्धिरित्यर्थः ॥

यदपि 'समन्वारम्भणात्' इति तत्राह—

**विभागः शतवत्** ॥ ११ ॥

'तं विद्याकर्मणी समन्वारभेते' इत्यत्र विद्या अन्यं पुरुषमन्वारभते, कर्मान्यमिति विभागो द्रष्टव्यः। शतवत् यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै, तद्वदित्यर्थः। एवं चास्य समन्वारम्भणवाक्यस्य संसारिविषयता, न मुमुक्षुविषयतेति भावः ॥

यच्च 'तद्वतो विधानात्' इति तत्राह—

**अध्ययनमात्रवतः** ॥ १२ ॥

'आचार्यकुलाद्वेदमधीत्य' इति वाक्ये वेदाध्ययनमात्रवतः कर्म विधीयते, नौपनिषदात्मज्ञानवत इत्यर्थः ॥

यत्तु 'नियमाच्च' इति तत्राह—

**नाविशेषात् ॥ १३ ॥**

'कुर्वन्नेवेह कर्माणि' इति वाक्यं न तत्त्वविद्विषयम्, विद्वानिति विशेषाभावादित्यर्थः ॥

यद्वा—

**स्तुतयेऽनुमतिर्वा ॥ १४ ॥**

इयं तत्त्वविदः कर्मानुमतिः कर्मानुज्ञा ब्रह्मविद्यास्तुतये ज्ञातव्या। स्तुतिश्चैवम्—यावज्जीवं कर्म कुर्वत्यपि त्वयि विदुषि विद्यासामर्थ्यात् कर्म न लेपाय भवतीति बोध्यम् ॥

किं च—

**कामकारेण चैके ॥ १५ ॥**

एके विद्वांसः प्रत्यक्षीकृततत्त्वज्ञानफलाः परोक्षफलकधर्मसाधनं प्रजादिकं कामकारेण स्वेच्छया त्यक्तवन्त इति श्रूयते 'एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते' इत्यादिना। तदेवं तत्त्वज्ञानस्य कर्माङ्गत्वाभावे तत्त्वविदां स्वेच्छया प्रजादित्यागो लिङ्गं सूचितमिति बोध्यम् ॥

अपि च—

**उपमर्दं च ॥ १६ ॥**

कर्मानुष्ठानहेतोः क्रियाकारकफलविभागस्य समस्तस्याविद्याकृतस्य विद्यासामर्थ्यात् उपमर्दम् अभावमामनन्ति 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यादिना। तथा च ब्रह्मविद्यायाः कर्मविरोधित्वान्न कर्माङ्गत्वमिति भावः ॥

ब्रह्मविद्यायाः कर्मानङ्गत्वे हेत्वन्तरमाह—

**ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥**

ऊर्ध्वरेतःसु यतिषु हि ब्रह्मविद्यावगता। न हि तस्याः कर्माङ्गत्वं संभवति, तेषां कर्माभावात्। न च यत्याश्रमः क्वापि न श्रुत इति सांप्रतम्। शब्दे हि 'त्रयो धर्मस्कन्धाः' इति प्रस्तुत्य 'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यस्मिन् शब्दे हि यत्याश्रमस्य श्रुतत्वात् प्रामाणिकोऽयं यत्याश्रमः। तदेवं ब्रह्मविद्यायाः न कर्माङ्गत्वम्, अपि तु स्वतन्त्रपुरुषार्थहेतुत्वमिति सिद्धम् ॥

पूर्वम् 'त्रयो धर्मस्कन्धाः' इत्यादिश्रुतिर्यत्याश्रमसद्भावे प्रमाणमित्यभाणि; तदसंभवीत्याक्षेपसंगत्येदमाह—

**परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥**

अत्र पूर्वपक्षे पारिव्राज्याभावात् ज्ञानस्य स्वतन्त्रफलत्वा-

सिद्धिः, सिद्धान्ते तत्सद्भावात् तत्सिद्धिरिति फलभेदः । अत्र यत्याश्रमो विषयः ; स किमस्ति न वेति विशये, जैमिनिराचार्य आह—नास्ति यत्याश्रमः, विध्यभावात् । 'त्रयो धर्मस्कन्धाः' इत्यादिश्रुतौ तु परामर्शमनुवादमात्रमवगम्यते, न विधिः । अत इयं श्रुतिः अचोदना लिङ्गादिशून्या, चकारात् ब्रह्मसंस्था स्तुतिपरा च । एवं चान्यपरया श्रुत्या न यत्याश्रमसिद्धिः । किं च 'वीरहा वा एष देवानां योऽग्निमुद्वासयते' इत्याद्या श्रुतिरग्न्युद्वासनप्रधानं यत्याश्रममपवदति हि यस्मात् तस्मान्नास्ति यत्याश्रम इति पूर्वः पक्षः ॥

२. परामर्शाधिकरणम् ।

सिद्धान्तस्तु—

**अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥**

पारिव्राज्यमनुष्ठेयं भगवान्बादरायणो मन्यते । कुतः, साम्यश्रुतेः 'त्रयो धर्मस्कन्धाः' इत्यादिश्रुतौ इतराश्रमाणां श्रुत्यन्तरविहितानां एतद्वाक्यानुवाद्यगार्हस्थ्येन साम्यश्रवणादित्यर्थः । ततश्चाश्रमचतुष्टयानुवादेन ब्रह्मसंस्थास्तुतिपरादपि वाक्यात्प्रतीयमाना आश्रमाः सिद्ध्यन्ति । न च वीरहेत्यादिश्रुतिविरोधः, तस्याः श्रुतेरज्ञानादग्न्युद्वासनोक्ताहिताग्निविषयत्वादिति फलितार्थः ॥

यद्वा—

## विधिर्वा धारणवत् ॥ २० ॥

अस्मिन्वाक्ये आश्रमाणां विधिरेव, नानुवादः न चानेकाश्रमविधाने वाक्यभेदः स्यादिति सांप्रतम् , अपूर्वत्वेनाश्रमाणां विधेरेवावश्यकत्वेन वाक्यभेदस्येष्टत्वात् । एकवाक्यताप्रतीतावप्यपूर्वार्थविधौ दृष्टान्तः—— धारणवत् 'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र स्रुग्दण्डादधस्तात् समिद्धारणविध्येकवाक्यताप्रतीतावप्युपरि धारणस्यापूर्वत्वादेकवाक्यताभङ्गेन विधिर्यथा कल्पितः, तथेहापीत्यर्थः। वस्तुतस्तु अस्मिन्वाक्ये पारिव्राज्यमेव विधीयते, आश्रमत्रयमनूद्यानित्यफलत्वेन तन्निन्दया ब्रह्मसंस्थत्वस्यैव नित्यफलत्वेन स्तूयमानत्वात् ; यत् स्तूयते तद्विधेयमिति न्यायात्। न च ब्रह्मसंस्थत्वस्य गृहस्थादीनां संभवादिति सांप्रतम् , तेषां स्वस्वकर्मासक्ततया ब्रह्मसंस्थत्वायोगात्। परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इत्यस्मिन पक्षे न वाक्यभेदः । तस्मात्सर्वकर्मपरित्यागलक्षणस्य पारिव्राज्यस्य प्रामाणिकत्वाद्विद्यायाः स्वतन्त्रपुरुषार्थसाधनत्वं युक्तमिति सिद्धम् ॥

पूर्वं यथा अनुष्ठेयाश्रमसाम्यश्रुतेः पारिव्राज्यस्यानुष्ठेयत्वं प्रतिष्ठापितम् , तद्वत् 'इयमेव जुहूरादित्यः' इत्यादिकर्माङ्गस्तुत्या

रसतमत्वादिवाक्यस्य साम्यात् स्तुतिमात्रत्वमिति दृष्टान्तसंगत्येदमाह—

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

अत्र पूर्वपक्षे कर्माङ्गाश्रितोपास्तीनाम् अनुष्ठानासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । उद्गीथाद्युपास्तिषु श्रूयते— 'स एष रसानां रसतमः परमः' इत्यादि । तद्वाक्यं किं कर्माङ्गोद्गीथस्तुतिमात्रम्, उतोद्गीथोपास्तौ गुणविधायकमिति विशये, रसतमत्वादिवाक्यं सर्वमपि कर्माङ्गोद्गीथस्तुतिमात्रम् । कुतः, कर्माङ्गोद्गीथाद्युपादानश्रवणादिति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु— न स्तुतिमात्रम्, अपि तु गुणविधायकम् । कुतः, अपूर्वत्वात् कर्माङ्गोद्गीथाद्युपास्तीनां रसतमत्वादिगुणानां च मानान्तराप्राप्तत्वादित्यर्थः । प्रकृत एव विधिसंभवे प्रकरणान्तरोद्गीथादिस्तुतिलक्षणाकल्पनमन्याय्यतरमिति भावः ॥

३. स्तुतिमात्राधिकरणम् ।

किं च—

## भावशब्दाच्च ॥ २२ ॥

किं च 'उद्गीथमुपासीत' 'सामोपासीत' इत्यादिविधिशब्दात् गुणविधायकमिदं वाक्यमित्यर्थः ॥

पूर्वं यथा रसतमत्वादेरुद्गीथादिस्तुत्यर्थत्वापेक्षयोपास्यविषयसमर्पकत्वस्य ज्यायस्त्वम्, तथा आख्यायिकानामपि विद्यास्तुत्यर्थत्वापेक्षया पारिप्लवशेषत्वस्य ज्यायस्त्वमस्त्विति दृष्टान्तसंगत्येदमाह—

**पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥**

४. पारिप्लवाधिकरणम् ।

अत्र पूर्वपक्षे औपनिषदाख्यायिकानां पारिप्लवप्रयोगशेषत्वात् तदेकवाक्यतोपपन्नशब्दबोध्यविद्यायाः प्राधान्याभावेन पुरुषार्थहेतुत्वासिद्धिः, सिद्धान्ते तासां विद्यास्तुत्यर्थत्वात् विद्यैकवाक्यतया तस्याः प्राधान्येन पुरुषार्थहेतुत्वसिद्धिरिति फलभेदः । वेदान्तेषु तत्र तत्र 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः' इत्याद्या आख्यायिकाः श्रूयन्ते । ताः किं पारिप्लवार्थाः, उत संनिहितविद्यास्तुत्यर्था इति विशये, पारिप्लवार्थाः ; अश्वमेधे पुत्रादिपरिवृताय राज्ञे यन्नानाविधकथाकथनं तत्पारिप्लवशब्देनोच्यते, तदर्था एव आख्यायिका इति चेदिति पूर्वः पक्षः । सिद्धान्तस्तु— न पारिप्लवार्थाः । कुतः, विशेषितत्वात् 'पारिप्लवमाचक्षीत' इत्युपक्रम्य 'मनुर्वैवस्वतो राजा' इत्यादिवाक्यशेषे कासांचिदेवाख्यायिकानां पारिप्लवशेषत्वेन विशेषितत्वादित्यर्थः ॥

ननु तर्हि किमर्था इमा आख्यायिका इत्याशङ्क्य संनि-

धिबलाद्विद्यार्था इत्याह—

**तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥**

तथा च उक्तयुक्त्या पारिप्लवार्थाभावे सति संनिधिबलाद्विद्यास्तुत्यर्थत्वमाख्यायिकानां युक्तम् । कुतः, एकवाक्यतोपबन्धात् संनिहिततत्तद्विद्यैकवाक्यत्वदर्शनादित्यर्थः ॥

पूर्वं यद्वदाख्यायिकानां विद्याशेषत्वेनापेक्षा, तद्वद्यज्ञादिकर्मणामपि फले विद्याशेषत्वेनापेक्षास्त्विति दृष्टान्तसंगत्येदमाह—

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥**

पुरुषार्थाधिकरणफलरूपत्वादस्य तत्रोक्तं फलं द्रष्टव्यम् । ब्रह्मविद्या किं स्वफले मोक्षे जनयितव्ये सहकारित्वेन यज्ञादिकर्माण्यपेक्षते, न वेति संदेहे, अपेक्षत इति पूर्वः पक्षः । सिद्धान्तस्तु— अत एव आद्याधिकरणोक्तात् स्वतन्त्रपुरुषार्थत्वादेव ब्रह्मविद्यायाः अग्नीन्धनाद्यनपेक्षा । अग्नीन्धनशब्देन स्वस्वाश्रमविहितानि कर्माणि लक्ष्यन्ते । तथा च मोक्षे न कर्मापेक्षा रजतभ्रमनिवृत्तौ शुक्तिज्ञानस्येवेत्यर्थः ॥

५. अग्नीन्धनाद्यधिकरणम् ।

यथा पूर्वं ब्रह्मविद्यायाः प्रमात्वाच्छुक्तिज्ञानस्येव स्वफले कर्मानपेक्षेत्यभाणि, तथा स्वोत्पत्तावपि कर्मानपेक्षा प्रमात्वादे-

वेति दृष्टान्तसंगत्येदमाह—

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥**

अत्र पूर्वपक्षे ज्ञानार्थं यज्ञाद्यनुष्ठानाभावः, सिद्धान्ते तदनुष्ठानावश्यंभाव इति फलभेदः। अत्र किं विद्यायाः स्वोत्पत्तौ कर्मापेक्षास्ति न वेति संदेहे, नास्तीति पूर्वः पक्षः। सिद्धान्तस्तु— विद्यायाः स्वोत्पत्तौ सर्वेषामाश्रमकर्मणामपेक्षास्ति। कुतः, यज्ञादिश्रुतेः 'विविदिषन्ति यज्ञेन दानेन' इत्यादिना यज्ञादिकर्मणां विविदिषाद्वारा ज्ञानसाधनत्वश्रवणात्। ननु परंपरया ज्ञानोत्पत्तौ कर्मापेक्षावन्मोक्षेऽप्यस्त्वपेक्षा। तत्राह— अश्ववत् यथाश्वो योग्यताबलात् रथचर्यायां विनियुज्यते न लाङ्गलकर्षणे, तद्वत्कर्मणां मोक्षे योग्यत्वाभावात् नापेक्षेत्यर्थः॥

६. सर्वापेक्षाधिकरणम्।

ज्ञानोत्पत्तौ बहिरङ्गसाधनमभिधायान्तरङ्गसाधनमभिधातुमाह—

**शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥**

यद्यप्यत्र विविदिषन्तीति वर्तमानापदेशात् न विधिः, तथापि शमदमाद्युपेतस्तु ब्रह्मविद्यार्थी स्यात्। कुतः, तदङ्गतया

विद्याङ्गतया तद्विधेः 'तस्मादेवंविच्छान्तो दान्त उपरतः' इत्यादिना तेषां शमदमादीनां विधानात्; तेषां विहितानां चावश्यानुष्ठेयत्वादित्यर्थः ॥

पूर्वं यथा विद्यासंनिधानात् शमादिकं विद्याङ्गं विधीयत इत्यभिहितम्, तथा सर्वान्नानुमतिः विद्याङ्गमेव विधीयत इति दृष्टान्तसंगत्येदमाह—

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २८ ॥**

अत्र पूर्वपक्षे प्राणविद्याविदो भक्ष्याभक्ष्यविभागासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। बृहदारण्यके प्राणविद्यायां श्रूयते—'न ह वा अस्यानन्नं जग्धं भवति' इति। तत्र प्राणोपासकस्य किमिदं सर्वान्नानुज्ञानं विद्याङ्गं विधीयते, उत स्तुत्यर्थं संकीर्त्यत इति संशये, विद्याङ्गं विधीयत इति पूर्वः पक्षः। सिद्धान्तस्तु— प्राणात्यये सर्वमन्नं सुरावर्जं यत् तस्य विद्वांसमविद्वांसं वा प्रति अदनीयत्वेन अनुमतिः अनुज्ञानम्, न स्वस्थं प्रति। कुतः, तद्दर्शनात् चाक्रायणोपाख्याने उषस्तेश्चाक्रायणस्य आपत्काल एव हि तस्य हास्तिपकोच्छिष्टकुल्माषभक्षणस्य दर्शनादित्यर्थः। एवं च विध्यभावात् श्वादिमर्यादान्नस्य एकेनात्तमशक्यत्वाच्च न

७. सर्वान्नानुमत्यधिकरणम्।

सर्वान्नानुज्ञानं विद्याङ्गं विधीयते; अपि तु 'प्राणमात्रस्यान्नमिदं सर्वम्' इति यच्चिन्तनं विहितम्, तत् स्तुत्यर्थं संकीर्त्यत इति भावः ॥

## अबाधाच्च ॥ २९ ॥

भक्ष्याभक्ष्यविवेकशास्त्रस्य अबाधाच्चार्थवादमात्रमित्यर्थः । अन्यथा सामान्यशास्त्रं विशेषपरतया नीयमानं बाधितं स्यादिति भावः ॥

## अपि च स्मर्यते ॥ ३० ॥

अपि चापत्काले विदुषोऽविदुषश्च सर्वान्नभक्षणं स्मर्यते— 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति, 'मद्यं नित्यं ब्राह्मणो वर्जयेत्' इति च ॥

स्मृतिमूलभूतां श्रुतिमप्याह—

## शब्दश्चातोऽकामकारे ॥ ३१ ॥

अस्याभक्ष्यभक्षणस्य प्रतिषेधः 'तस्माद्ब्राह्मणः सुरां न पिबेत्' इत्येवंरूपशब्दश्च अकामकारे स्वेच्छाकृतप्रवृत्तिनिरासे श्रूयते । अतः प्राणविदः सर्वान्नानुज्ञानमर्थवादमात्रमिति सिद्धम् ॥

पूर्वं यथा सर्वान्नानुमतेः शास्त्रान्तरविरोधात् स्तुतित्व-

मुक्तम् , तथा 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिकर्मनित्यत्वशास्त्रविरोधाद्यज्ञादीनां ज्ञानसाधनत्वश्रुतेः स्तुतित्वमस्त्विति दृष्टान्तसंगत्येदमाह—

## विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥

अत्र पूर्वपक्षे विविदिषावाक्यस्य विवक्षितार्थत्वासिद्धिः, सिद्धान्ते खादिरवत् कर्मणामुभयार्थत्वसंभवात् तत्सिद्धिरिति फलभेदः । सर्वापेक्षेत्यत्र स्वस्वाश्रमनित्यकर्मणां तत्त्वज्ञानसाधनत्वमुक्तम् । तानि नित्यकर्माण्यमुमुक्षुणा कर्तव्यानि न वेति संदेहे, न कर्तव्यानीति पूर्वः पक्षः । सिद्धान्तस्तु— अमुमुक्षुणापि आश्रमकर्मावश्यं कर्तव्यमेव । 'यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिना विहितत्वादित्यर्थः ॥

८. आश्रमकर्माधिकरणम् ।

नन्वेवं सति कर्मणां विद्यार्थत्वं न स्यादित्यत आह—

## सहकारित्वेन च ॥ ३३ ॥

सह मिलित्वा चित्तशुद्धिद्वारा विद्यां कुर्वन्तीति सहकारीणि कर्माणि, तेषां भावः तत्त्वम् , तेन विद्यार्थत्वेन नित्यकर्माणि कर्तव्यानि । यज्ञादिश्रुत्या तदर्थत्वेन तेषां विहितत्वादेवेत्यर्थः ॥

ननु कर्मकाण्डस्थनित्याग्निहोत्रेभ्यो भिन्ना एव यज्ञादयो विविदिषावाक्ये विद्यासंयुक्ततया विधीयन्ते, प्रकरणभेदस्य भेदकत्वात्; कथं तेषामुभयार्थत्वमित्यत आह—

**सर्वथापि त एवोभयलिङ्गात्** ॥ ३४ ॥

सर्वथापि नित्यत्वेन विद्यार्थत्वेन च अनुष्ठेया यज्ञादयः त एव, न भिन्नाः । कुतः, उभयलिङ्गात् 'यज्ञेन विविदिषन्ति' इति श्रुतिलिङ्गात्, 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इति स्मृतिलिङ्गाच्चेत्यर्थः ॥

किं च—

**अनभिभवं च दर्शयति** ॥ ३५ ॥

ब्रह्मचर्यादिसाधनसंपन्नस्य रागादिक्लेशैरनभिभवम् 'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' इत्याद्या श्रुतिर्दर्शयति । अनेन सूत्रेण ब्रह्मचर्याद्याश्रमकर्मणां सहकारित्वमेव दृढीकृतम् ॥

पूर्वं यथा यज्ञादिश्रुत्या आश्रमकर्मणामेव ज्ञानसाधनत्वविधानादाश्रमिणामधिकारः, न तथा विधुराणामधिकारः, तत्कृतकर्मणां ज्ञानसाधनत्वाभावादिति प्रत्युदाहरणसंगत्येदमाह—

**अन्तरा चापि तु तद्दृष्टेः** ॥ ३६ ॥

अत्र पूर्वपक्षे अनाश्रमिकर्मणां जपादीनां विद्यासाधनत्वासिद्धिः; सिद्धान्ते तत्सिद्धिरिति फलभेदः। अत्र विधु-

१. विधुराधिकरणम्।

राणां किं ब्रह्मविद्यायामधिकारोऽस्ति न वेति संदेहे, नास्तीति पूर्वः पक्षः। सिद्धान्तस्तु— अन्तरा आश्रममन्तरा विना वर्तमानानामपि अस्त्यधिकारः। कुतः, तद्दृष्टेः तस्य ब्रह्मविद्याधिकारस्यानाश्रमिणां रैक्कादीनां श्रुतौ स्मृतौ च दर्शनादित्यर्थः॥

**अपि च स्मर्यते ॥ ३७ ॥**

संवर्तकप्रभृतीनामनाश्रमिणामपि योगित्वं स्मर्यत इत्यर्थः॥

नन्वनाश्रमिणां विद्याहेतुकर्माभावान्न तत्राधिकार इत्यत आह—

**विशेषानुग्रहश्च ॥ ३८ ॥**

अनाश्रमिणामपि रैक्कादीनां जपोपवासदेवताराधनादिभिः कर्मविशेषैर्ज्ञानहेतुभिरस्ति विद्यायामनुग्रह इत्यर्थः॥

नन्वनाश्रमिणामपि जपादिनैव विद्यासिद्धेः तर्ह्याश्रमित्वं व्यर्थं स्यादित्यत आह—

**अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ ॥**

अतस्तु अनाश्रमित्वात् इतरत् आश्रमित्वं ज्यायः शीघ्रमेव

विद्यासाधनम्। कुतः, 'तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्च' इति श्रुतौ ब्रह्मवित्त्वविशेषणरूपश्रुतिलिङ्गाच्चेत्यर्थः ॥

पूर्वं यथा अनाश्रमिणां कर्मणो विद्याहेतुत्वमुक्तम्, तथोत्तमाश्रमात् पूर्वाश्रमं प्राप्तस्य कर्मणां विद्याहेतुत्वम् अस्त्विति दृष्टान्तसंगत्येदमाह——

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ४० ॥

१०. तद्भूताधिकरणम्।

अत्र पूर्वपक्षे आश्रमैज्यायस्त्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। उत्तमाश्रमात्पूर्वाश्रमं प्राप्तस्य कर्म विद्याहेतुर्वा न वेति संदेहे, विद्याहेतुरिति पूर्वः पक्षः। सिद्धान्तस्तु—— तद्भूतस्य प्राप्तोत्तमाश्रमस्य अतद्भावः उत्तमाश्रमात्प्रच्युतिः कथमपि न संभवतीति जैमिनेरप्याचार्यस्य संमतम्। अपिशब्देन भगवतो बादरायणस्य च संमतमेवेति दर्शितम्। कुतः, नियमातद्रूपाभावेभ्यः 'अरण्यमियादिति पदं ततो न पुनरेयात्' इति नियमः, प्रत्यवरोहबोधकश्रुत्यभावः अतद्रूपम्, शिष्टाचाराभावश्च तेभ्यः। तस्मात्प्रच्युतेरप्रामाणिकत्वात्प्रच्युतस्य कर्म न विद्याहेतुरिति सिद्धम् ॥

यथा पूर्वं प्रच्युतस्य कर्म न विद्याहेतुरित्युक्तम्, तथा प्रच्युतस्यापि कृतप्रायश्चित्तस्य कर्म न विद्याहेतुरिति दृष्टान्तसंगत्येदमाह—

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥**

अत्र पूर्वपक्षे कृतप्रायश्चित्तस्य कर्म न विद्याहेतुः, सिद्धान्ते तद्धेतुरिति फलभेदः । प्रमादात्प्रच्युतस्य किं प्रायश्चित्तमस्ति न वेति संदेहे, आधिकारिकमपि अधिकारलक्षणसिद्धं गर्दभालम्भनरूपप्रायश्चित्तमाधिकारिकम्, तदपि नैष्ठिकस्यावकीर्णिनो नैवास्ति । कुतः, पतनानुमानात् 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा' इत्यनिवर्त्यपातकश्रुत्यनुमापकस्मृत्या तस्य प्रायश्चित्तस्यायोगादिति पूर्वः पक्षः ॥

११. आधिकारिकाधिकरणम् ।

सिद्धान्तस्तु—

**उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४२ ॥**

नेदं महापातकम्, येन प्रायश्चित्तं न स्यात् । अपि त्वेके आचार्या उपपदपूर्वमेवेदं पातकं मन्यन्ते । अत उपकुर्वाणस्येव

नैष्ठिकस्यापि उक्तप्रायश्चित्तसद्भावमिच्छन्ति, उभयोः ब्रह्मचारित्वे सति अवकीर्णित्वाविशेषात् ; अशनवत् यथा ब्रह्मचारिणः मधुमांसाशिनः व्रतलोपः पुनः संस्कारश्च, तद्वत ; तस्मात् प्रायश्चित्तसद्भावो युक्ततरः । तदुक्तं प्रमाणलक्षणे— 'समा विप्रतिपत्तिः स्यात्' 'शास्त्रस्था वा तन्निमित्तत्वात्' इति । प्रायश्चित्ताभावस्मरणं तु यत्नगौरवार्थमिति व्याख्यातव्यम् । इत्थं वानप्रस्थस्य महाकक्षाभिवर्धनं प्रायश्चित्तम्, यतेस्तु स्वशास्त्रसंस्कार इति ध्येयम् ॥

पूर्वं यथा प्रच्युतस्य प्रायश्चित्तेनैव शुद्धत्वात् तत्कृतं कर्म विद्यासाधनमित्यवादि, तथा कृतप्रायश्चित्तेन सह शिष्टाचाररूपं कर्म विद्यासाधनं भवत्विति दृष्टान्तसंगत्येदमाह—

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४३ ॥**

अत्र पूर्वपक्षे आरूढपतितमित्यादिशास्त्रविरोधः, सिद्धान्ते तदानुगुण्यमिति फलभेदः । कृतप्रायश्चित्तेन सह कृतं

१२. बहिराधिकरणम् ।

श्रवणादिकं किं विद्यासाधनं न वेति संदेहे, विद्यासाधनमिति पूर्वः पक्षः । सिद्धान्तस्तु—ऊर्ध्वरेतसामाश्रमात् प्रच्युतिरूपपातकं महापातकं वा अस्तु; उभयथापि ते कृतप्रायश्चित्ता अपि शिष्टैर्बहिष्कार्याः । 'प्रायश्चित्तं न पश्यामि' 'आरूढपतितं विप्रं....स्पृष्ट्वा चान्द्रायणं चरेत्'

इत्यादिनिन्दास्मृतेः शिष्टाचाराच्च । अतः प्रायश्चित्तेन परलोकशुद्धेनापि तेन सह कृतं श्रवणादिकं न विद्यासाधनमिति सिद्धम् ॥

पूर्वं यथा यः कृतप्रायश्चित्तः स संव्यवहार्य इत्युत्सर्गस्य निन्दातिशयस्मृत्या नैष्ठिकादिषु बाध इत्यभाणि, तथा यो यदङ्गकर्ता स तदाश्रितस्य कर्तेति उत्सर्गस्य कर्तुः फलश्रुत्या बाधो भवत्विति दृष्टान्तसंगत्येदमाह—

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥**

अत्र पूर्वपक्षे कर्तृत्वभोक्तृत्वयोरैकाधिकरण्यम्, सिद्धान्ते ऋत्विजः कर्तृत्वं स्वाम्यधीनमिति परंपरयैकाधिकरण्यमिति फलभेदः । तत्र किमङ्गाश्रितोपासनानि यजमानकर्तृकाणि, आहोस्वित् ऋत्विक्कर्तृकाणीति संशये, स्वामिनो यजमानस्यैवाङ्गाश्रितोपास्तिषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते । कुतः, फलश्रुतेः कर्माङ्गपञ्चविधसाम्नि वृष्ट्युपासकस्य 'वर्षति हास्मै' इत्यादिफलश्रवणात् । अतः यजमानकर्तृकाण्येवेति पूर्वः पक्षः ॥

१३. स्वाम्यधिकरणम् ।

सिद्धान्तस्तु—

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥**

अङ्गोपासनमार्त्विज्यमृत्विक्कर्तृकमेवेत्यौडुलोमिराचार्यो मन्यते। तस्मै हि साङ्गाय कर्मणे ऋत्विक् परिक्रियते यजमानेन; तथा च यजमानगामिफलकमप्यङ्गोपासनं यजमानेन स्वर्गगामिफलककर्मार्थे परिक्रीतऋत्विक्कर्तृकमेव कर्माङ्गप्रणयनाश्रितगोदोहनादिवदिति न फलश्रुतिविरोधः ॥

किं च—

## श्रुतेश्च ॥ ४६ ॥

'यां वै कांचन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैव तामाशिषमाशासत इति होवाच' इति श्रुतेः ऋत्विक्कर्तृकस्योपासनस्य यजमानगामिफलत्वमवगम्यत इत्युपासनानि ऋत्विक्कर्तृकाणीति सिद्धम् ॥

पूर्वं यथा 'यां कांचन यज्ञे....' इत्यादिवाक्यशेषादुद्गीथाद्युपासनास्वार्त्विज्यनिर्णयः, तद्वत् 'अथ मुनिः' 'अथ ब्राह्मणः' इति विधिविधुरवाक्यशेषान्मौनस्याविधेयत्वनिश्चय इति दृष्टान्तसंगत्येदमाह—

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

अत्र पूर्वपक्षे मौनस्यानुष्ठेयत्वासिद्धिः, सिद्धान्ते ज्ञानं प्रत्यन्तरङ्गस्य तत्सिद्धिरिति फलभेदः। बृहदारण्यके श्रूयते—

'बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः' इति । तत्र

**१४. सहकार्यन्तरविध्यधिकरणम् ।**

किं मौनं विधीयते न वेति संदेहे, नेति पूर्वः पक्षः । सिद्धान्तस्तु— फलभूतसाक्षात्कारे श्रवणाद्यपेक्षया सहकार्यन्तरस्य मौनस्य निदिध्यासनाख्यस्य विधिराश्रयितव्यः, अपूर्वत्वात् । ननु 'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र मौनशब्दस्य पारिव्राज्ये प्रयोगदर्शनात् कथमत्र मौनं निदिध्यासनं स्यादत आह— तृतीयम् । श्रवणाद्यपेक्षया निदिध्यासनमेवात्र मौनं विधेयम्; स्मृतावितराश्रमसमभिव्याहारात् निदिध्यासनप्रधानं पारिव्राज्यं मौनशब्देन लक्ष्यत इत्यविरोधः । ननु कस्य मौनविधिरित्यत आह— तद्वतः, 'विदित्वा' इति परोक्षज्ञानवतः संन्यासिनः प्रकृतत्वात् । ननु सूक्ष्मवस्तुसाक्षात्कारे निदिध्यासनस्य स्वतः प्राप्तत्वात् विधिर्निरर्थक इत्यत आह— पक्षेण । यस्मिन् पक्षे भेददर्शनप्राप्तिः तेन पक्षेण प्राप्त्यभावात् विधिरर्थवानेव । ननु ब्रह्मपरवाक्ये कथं विधिरित्याशङ्क्य दृष्टान्तमाह— विध्यादिवत् । विधेः आदिः विध्यादिः प्रधानविधिः, तद्वत्, यथा दर्शपूर्णमासप्रधानपरे वाक्ये अन्वाधानादेरङ्गजातस्य विधिः, तद्वन्मौनस्येत्यर्थः ॥

नन्वेवं श्रवणादिप्रधाने कैवल्याश्रमे श्रुतिसिद्धे कस्माच्छा-

न्दोग्ये ' अभिसमावृत्य कुटुम्बे ' इति गृहिणोपसंहारस्तत्राह—

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

यज्ञादीनामाश्रमान्तरविहितानां वा शमादीनां गृहस्थाश्रमे कार्त्स्न्येन संभवात् गृहस्थाश्रमेणोपसंहारः, न तु संन्यासाभावादित्यर्थः ॥

**मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

मौनस्य गार्हस्थ्यस्य च यथा श्रुतिमत्त्वम् , तद्वद्ब्रह्मचारिवानप्रस्थयोरपि श्रुतिषूपदेशात् ताभ्यां सह चत्वार आश्रमाः प्रसङ्गादुक्ताः । द्वयोर्बहुवचनं वृत्तिभेदाभिप्रायकम् ॥

पूर्वं मौनशब्दस्य ज्ञानातिशये निदिध्यासने प्रसिद्धत्वात् निदिध्यासनं विधेयमित्युक्तम् ; तद्वद्बाल्यशब्दस्य कामचारादौ प्रसिद्धेः तद्विधेयमिति दृष्टान्तसंगत्येदमाह—

**अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥**

अत्र पूर्वपक्षे कामचारादेः विद्याङ्गत्वेनानुष्ठानम् , सिद्धान्ते भावशुद्धेरेवेति फलभेदः । पूर्वोदाहृतश्रुतौ बाल्यशब्देन

१५. अनाविष्काराधिकरणम् ।

किं बालस्य कर्म कामचारादिकं विधीयते, उत भावशुद्धिरिति संशये, कामचारादिकमिति पूर्वः पक्षः । सिद्धान्तस्तु—' अव्यक्तलिङ्गोऽव्यक्ताचारः ' इति श्रुतेः स्वगुणप्रख्यापनादिभि-

रनाविष्कुर्वन्नात्मानमप्रख्यापयन् भावशुद्धो भवेदित्येतावन्मात्रं विधीयते, तावन्मात्रस्य प्रधाने ज्ञानाभ्यासे अन्वयात् । न कामचारादिकम् , तस्य तत्रानन्वयात्, शौचादिधर्मविधायिशास्त्रविरोधाच्चेति ॥

इत्थं संन्यासादिबाल्यान्तं साधनजातमभिधाय, तत्साध्यविद्याजन्म विचार्यत इति हेतुहेतुमद्भावसंगत्येदमाह—

**ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥**

अत्र पूर्वपक्षे श्रवणादेर्विद्यासाधनत्वासिद्धिः, सिद्धान्ते प्रतिबन्धकवशाद्विलम्बेऽपि तत्सिद्धिरिति फलभेदः । तत्र श्रवणादिभिः किमिहैव विद्योत्पत्तिः, उत कदाचिदमुत्रापीति संशये, इहैव विद्याजन्मास्त्विति कामनया श्रवणादिषु प्रवृत्तेरैहिकमेव विद्याजन्मेति पूर्वः पक्षः । सिद्धान्तस्तु— फलोन्मुखं विद्याविरुद्धफलकं कर्म प्रस्तुतप्रतिबन्धः । तस्मिन्प्रतिबन्धकाभावे सत्यैहिकं विद्याजन्म श्रवणादिभिर्भवत्येव ; सति तु प्रतिबन्धे अमुत्रापीत्यनियम एव ; न त्विहैवेति नियमः । कुतः, तद्दर्शनात् ' गर्भ एवैतच्छयानो वामदेव एवमुवाच ' इति ' श्रवणायापि बहुभिर्यो न लभ्यः ' इत्यादिश्रुतिषु प्रतिबन्धाप्रतिबन्धाभ्यां तस्य नियमस्य दर्शनादित्यर्थः ॥

१६. ऐहिकाधिकरणम् ।

पूर्वं यथा विद्यायाः ऐहिकामुष्मिकत्वविशेषनियम उक्तः, तथा तत्फलेऽपि मोक्षे कश्चिदुत्कर्षादिविशेषनियमः स्यादिति दृष्टान्तसंगत्येदमाह—

**एवं मुक्तिफलानियमस्तदवस्थावधृते-स्तदवस्थावधृतेः ॥ ५२ ॥**

अत्र पूर्वपक्षे कर्मसाध्या मुक्तिः। सिद्धान्ते ज्ञानैकाभिव्यक्ता मुक्तिरिति फलभेदः। मुक्तिरत्र विषयः। तस्याः किं

१७. मुक्तिफलानियमाधिकरणम्।

विद्यावत् विशेषनियमोऽस्ति न वेति संदेहे, अस्तीति पूर्वः पक्षः। सिद्धान्तस्तु— एवं विद्यावत् मुक्तिरूपफलस्यानियमः निर्विशेषत्वमेव। कुतः, तदवस्थावधृतेः मुक्त्यवस्थायाः निर्विशेषब्रह्मरूपत्वेन 'ब्रह्म वेद ब्रह्मैव भवति' इति सर्वश्रुतिष्ववधारणात्, तस्माद्विद्यासमकालैव मुक्तिः; सा च निरतिशयानन्दब्रह्मस्वरूपैवेति सिद्धम्। पदाभ्यासोऽध्यायपरिसमाप्तिद्योतनार्थः ॥

**यदैक्यमत्यै वैराग्यतत्त्वमर्थोपसंहृतिः।**
**शान्त्यादिसाधनं सर्वं प्रत्यपादि तदस्म्यहम् ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्ज-
सेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां
श्रीमद्ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
तृतीयोऽध्यायः ॥

ॐ

# ॥ चतुर्थोऽध्यायः ॥

पूर्वत्र साधनं निरूपितम्, इह तत्फलं निरूप्यत इति हेतुहेतुमद्भावसंगत्यायमध्याय आरभ्यते। तत्र पूर्वं मोक्षे विशेषाभाव उक्तः; तथा श्रवणादौ आवृत्तिविशेषो नास्तीति दृष्टान्तावान्तरसंगत्येदमधिकरणमाह—

**आवृत्तिरसकृदुपदेशात् ॥ १ ॥**

अत्र पूर्वपक्षे श्रवणादेः प्रयाजादिवददृष्टार्थत्वात् सकृदनुष्ठानम्, सिद्धान्ते त्ववघातवत् यावत्फलमावृत्तिरिति फलभेदः।

१. आवृत्त्यधिकरणम्। पूर्वं साक्षादेव श्रुत्युक्तं संन्यासादिसाधनं चिन्तितम्। फलार्थापत्तिगम्यम् आवृत्त्यादिकमश्लेषाधिकरणात् प्राक् चिन्त्यते। तत्र अस्याधिकरणस्य श्रवणादिसाधनं विषयः; तत् किं सकृदेव कर्तव्यम्, उत तस्यावृत्तिः कर्तव्या इति विशये, सकृदेवेति पूर्वः पक्षः। सिद्धान्तस्तु— षड्जादिस्वरसाक्षात्कारवत् दुर्विज्ञेयात्मसाक्षात्कारस्यावृत्तिविशिष्टश्रवणादिसाध्यतया तदावृत्तिरेव कर्तव्या।

कुतः, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्याद्यसकृदुपदेशात्। एवम् 'वेद' 'उपासीत' इत्यावृत्तिश्रवणात् उपास्यसाक्षात्कारद्वारा फलहेतुषु उपासनेषु आवृत्तिर्बोध्या ॥

किं च—

## लिङ्गाच्च ॥ २ ॥

'रश्मींस्त्वं पर्यावर्तयात्' इति रश्मिबहुत्वोपासनं विदधत् वाक्यं प्रत्ययावृत्तिं दर्शयति। अतः तल्लिङ्गात् तन्न्यायात् साक्षात्कारसाधनेषु आवृत्तिः कर्तव्येत्यर्थः ॥

पूर्वत्र श्रवणादेरावृत्तिरुक्ता, तामुपजीव्य किंचिद्विचार्यत इत्युपजीव्योपजीवकभावसंगत्येदमाह—

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

अत्र पूर्वपक्षे श्रुतीनामभेदपराणां गौणार्थत्वम् , सिद्धान्ते मुख्यार्थत्वमिति फलभेदः। तत्र किं श्रवणाद्यावृत्तिकाले प्रत्यक्त्वेन ब्रह्म ध्यातव्यम् , उत भिन्नत्वेनेति विशये, नाहमीश्वर इति प्रत्यक्षविरोधात् भिन्नत्वेनेति पूर्वः पक्षः। सिद्धान्तस्तु—आत्मेत्येव ब्रह्म ध्यातव्यम्। तथाहि जाबाला आत्मत्वेन ब्रह्माभ्युप-

२. आत्मत्वोपासनाधिकरणम्।

गच्छन्ति—'त्वं वाहमस्मि भगवो देवते अहं वै त्वमसि' इति। तथा ग्राहयन्ति च ब्रह्म आत्मत्वेन 'तत्त्वमसि' इत्यादिवाक्यानि। न च तेषां 'नाम ब्रह्म' इत्यादिवत् गौणार्थत्वम्, सति मुख्यार्थत्वे गौणार्थत्वायोगात्। न च प्रत्यक्षादिविरोधः, तस्य मिथ्याभेदगोचरत्वेन पारमार्थिकाभेदागोचरत्वादिति भावः॥

पूर्वं यथा ब्रह्मणा सहाभेदसत्त्वादहंग्रह उक्तः, तद्वत्प्रतीकेष्वपि ब्रह्मविकारतया जीवाभिन्नब्रह्माभिन्नत्वात् जीवाभेदसत्त्वेनाहंग्रहः कार्य इति दृष्टान्तसंगत्येदमाह—

**न प्रतीके न हि सः॥ ४॥**

अत्र पूर्वपक्षे प्रतीकोपास्तीनामहंग्रहोपास्तेर्विशेषासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। 'मनो ब्रह्म' इत्यादीनि प्रतीकोपासनानि श्रूयन्ते। तत्र किं मनआदौ प्रतीके अहंग्रहः कर्तव्यः, न वेति संदेहे, कर्तव्य इति पूर्वः पक्षः। सिद्धान्तस्तु—प्रतीके अहंग्रहो न कर्तव्यः। कुतः, विकल्पासहत्वात्। तथाहि—किं प्रतीके आत्मत्वानुभवबलादहंग्रहः, उत श्रुतत्वात्, उताहोस्विदत्र स्वाभिन्नब्रह्माभिन्नत्वात्। न तावदाद्यः, तथानुभवाभावात्, न हि स उपासकः आत्मत्वेन प्रतीकमनुभवति; न द्वितीयः, अश्रवणात्; नापि तृतीयः, प्रतीकस्य स्वरूपेण ब्रह्माभिन्नत्वायोगात्।

३. प्रतीकाधिकरणम्।

अतः प्रतीके अहंग्रहो न कर्तव्य इति सिद्धम् ॥

'पूर्वोक्तप्रतीकोपासनानि विषयीकृत्यान्यत्किंचिद्विचार्यत इत्येकविषयत्वसंगत्येदमाह—

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

अत्र पूर्वपक्षे निकृष्टे उत्कृष्टबुद्धिः कर्तव्येति लौकिकन्यायानपेक्षा, सिद्धान्ते तदपेक्षेति फलभेदः। अत्र किं ब्रह्मणि प्रतीकदृष्टिः कर्तव्या, उत प्रतीके ब्रह्मदृष्टिरिति विशये, ब्रह्मणः प्राधान्येनोपास्यत्वासिद्धये तस्मिन प्रतीकदृष्टिः कर्तव्येति पूर्वः पक्षः। सिद्धान्तस्तु— प्रतीक एव ब्रह्मदृष्टिः कर्तव्या। कुतः, ब्रह्मण उत्कर्षात्। उत्कृष्टदृष्टौ हि निकृष्टे क्रियमाणायां निकृष्टस्योत्कृष्टता भवति, राजदृष्ट्यामात्यस्येव; न चैवं ब्रह्मणः प्राधान्यालाभः, इष्टापत्तेरिति भावः ॥

४. ब्रह्मदृष्ट्यधिकरणम्।

सिद्धरूपादित्यादिभ्यः कर्मरूपोद्गीथानां फलसंनिकर्षोत्कर्षात् ब्रह्मवद्विशेषवत्त्वनियम इति दृष्टान्तसंगत्येदमाह—

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

अत्र पूर्वोत्तरपक्षयोः तत्तत्पक्षसिद्धिरेव फलमिति द्रष्टव्यम्। 'य एवासौ तपति तमुद्गीथमुपासीत' इत्यादित्याङ्गा-

५. आदित्यादिमत्यधिकरणम् ।

श्रितोपासनानि श्रूयन्ते । तत्र किमादित्यादिपूद्गीथादिदृष्टिः कर्तव्या, उतोद्गीथादिष्वादित्यादिदृष्टिरिति विशये, आदित्यादिपूद्गीथादिदृष्टिरिति पूर्वः पक्षः । सिद्धान्तस्तु— उद्गीथादिषु कर्माङ्गेष्वादित्यादिमतय एव कर्तव्याः । कुतः, कर्मसमृद्धिरूपफलोपपत्तेः । यथा प्रोक्षणादिना व्रीह्यादिषु संस्कृतेषु प्रकृतकर्मणः अपूर्वमुत्पद्यते, तथा कर्माङ्गोद्गीथादिष्वादित्यादिमतिभिः संस्कृतेषु प्रकृतकर्मणः फलाधिक्यलक्षणा समृद्धिरुपपद्यत इत्यर्थः । आदित्यादिपूद्गीथादिदृष्टिपक्षे यथोक्तफलसंनिकर्षासिद्धेरुद्गीथादीनामुत्कर्षासिद्धिरित्यभिसंधिः ॥

पूर्वं कर्माङ्गाश्रितोपासनानामासननियमानपेक्षाणामनुष्ठानप्रकार उक्तः । तद्वदङ्गानाश्रितोपासनेष्वपि अनियम इति दृष्टान्तसंगत्येदमाह—

## आसीनः संभवात् ॥ ७ ॥

अत्र पूर्वपक्षे आसनाभ्यासासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र कर्माङ्गानाश्रितान्युपासनानि किं तिष्ठन्नासीनः

६. आसीनाधिकरणम् ।

शयानो वा कुर्यादित्यनियमः, उत आसीन एवेति नियम इति विशये, अनियम इति पूर्वः पक्षः । सिद्धान्तस्तु—आसीन एव उपासनानि कुर्वीत ।

कुतः, गमनादीनां चित्तविक्षेपकरतया आसीनस्यैवोपासनानां संभवादित्यर्थः ॥

**ध्यानाच्च ॥ ८ ॥**

उपासनानां ध्यायत्यर्थध्यानरूपत्वात्, ध्यायतेश्चासीनेषु बकादिषु एकविषयदृष्टिषु प्रयोगादासीन एवोपासीतेत्यर्थः ॥

**अचलत्वं चापेक्ष्य ॥ ९ ॥**

'ध्यायतीव पृथिवी' इत्यत्र पृथिव्या अचलत्वमपेक्ष्य ध्यानोपचारो दृष्टः । तस्मादपि लिङ्गादासीन एवोपासीतेत्यर्थः ॥

**स्मरन्ति च ॥ १० ॥**

'शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः' इत्यादिना शिष्टा उपासनार्थमासनं स्मरन्ति । अत आसीन एवोपासीतेति सिद्धम् ॥

पूर्वमङ्गानाश्रितोपासनेषु यथा आसननियम उक्तः, तद्वद्दिगादिनियमोऽप्यस्तु; 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इत्यादिदिगादिनियमदर्शनादिति दृष्टान्तसंगत्येदमाह—

**यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥**

अत्र पूर्वपक्षे दिगादिष्वादरः, सिद्धान्ते त्वनादर इति फलभेदः । तेष्वेवोपासनेषु दिगादिनियमोऽस्ति न वेति विशये,

अस्तीति पूर्वः पक्षः । सिद्धान्तस्तु— प्राच्यादिदिगादिनियमो नास्ति; किं तु यत्र दिशि देशे काले वा चित्तस्यैकाग्रता एकविषयप्रवाहः, तत्रोपासीत । कुतः, दिगादिविशेषाश्रवणात् । ननु 'समे शुचौ' इति देशविशेषः श्रूयत इति चेत् , बाढम् ; तदपि श्रवणं चित्तस्यैकाग्रतासंपादकदेशे उपासीतेति दर्शयति, वाक्यशेषे मनोनुकूलत्वविशेषणात् । 'प्राचीनप्रवणे' इत्यादिश्रवणं तु कर्मण्येव नोपासनेष्विति द्रष्टव्यम् ॥

७ एकाग्रताधिकरणम् ।

पूर्वं यथा दिगादिनियमाश्रवणात् तदभाव उक्तः, तथा यावज्जीवमुपासनावृत्त्यश्रवणात् तदभाव इति दृष्टान्तसंगत्येदमाह—

**आ प्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥**

अत्र पूर्वपक्षे कादाचित्कप्रत्ययावृत्तेः अदृष्टद्वारा उपास्यसाक्षात्कारहेतुत्वम् , सिद्धान्ते निरन्तरप्रत्ययावृत्तेः साक्षादेव तद्धेतुत्वमिति फलभेदः । अत्राहंग्रहोपासनानि किं कदाचित् कृत्वोपरमेत्, उत यावज्जीवमुपासीतेति विशये, कदाचिदिति पूर्वः पक्षः । सिद्धान्तस्तु— आ प्रायणात् आ मरणात् उपासीत । हि यतः तत्रापि मरणकालेऽपि, 'स यावत्क्रतुरयमस्माँल्लोकात्प्रैति'

८. आप्रायणाधिकरणम् ।

इति श्रुत्या उपास्यप्रत्ययानुवर्तनं दृष्टम् । न च तददृष्टसाध्यम्, दृष्टे संभवत्यदृष्टकल्पनानुपपत्तेः । तस्मादामरणमहंग्रहोपासनं कुर्वीतेति सिद्धम् ॥

पूर्वं यथा उपासकानां यावज्जीवं कर्तव्यमस्तीत्युक्तम्, न तथा ब्रह्मात्मविदामिति प्रत्युदाहरणसंगत्या कर्मक्षयलक्षणां जीवन्मुक्तिमाह—

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥**

अत्र पूर्वपक्षे ब्रह्मविदोऽपि संचितपापफलभोगानन्तरं मुक्तिः, सिद्धान्ते विद्योत्पत्त्यनन्तरमेव पापनाशात् जीवन्मुक्तिरिति फलभेदः । अत्र ब्रह्मविदः उत्तरपूर्वाघाश्लेषविनाशौ भवतः, उत नेति संदेहे, 'नाभुक्तं क्षीयते कर्म' इति स्मृतेः नेति पूर्वः पक्षः । सिद्धान्तस्तु— तदधिगमे ब्रह्मसाक्षात्कारे सति उत्तरपूर्वाघयोः ज्ञानादूर्ध्वं देहेन्द्रियादिवशात् संभावितं पापमुत्तराघम्, ज्ञानात्पूर्वमिह जन्मनि जन्मान्तरे वा संचितं पापं पूर्वाघम्, तयोरश्लेषविनाशौ भवत एव । कुतः, तद्व्यपदेशात् 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते इति' 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे

९. तदधिगमाधिकरणम् ।

पाप्मानः प्रदूयन्ते' इति श्रुतिभ्यां तयोरुत्तरपूर्वाघाश्लेषविनाशयोर्ब्रह्मविदि व्यपदेशात् । एवम् 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादिश्रुत्या निर्गुणब्रह्मविद्यप्युत्तरपूर्वाघाश्लेषविनाशयोर्व्यपदेशादित्यर्थः । स्मृतिस्त्वज्ञविषयेति भावः ॥

पूर्वं ब्रह्मविदः पापस्याश्लेषविनाशावुक्तौ; न तथा पुण्यस्यापि तौ भवतः, तस्य श्रौतत्वेन श्रौतब्रह्मज्ञानेनाविरोधादिति प्रत्युदाहरणसंगत्येदमाह—

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥**

फलमत्र पूर्ववत् । पुण्यस्याप्यश्लेषविनाशौ भवतः, उत नेति संदेहे, नेति पूर्वः पक्षः । सिद्धान्तस्तु—अकर्त्रात्मबोधसामर्थ्यादितरस्यापि पुण्यस्योत्तरस्य पूर्वस्य च एवमघवदश्लेषः विनाशश्च भवतः, 'उभे उ हैवैष एते तरति' इत्यादिश्रुतिभिस्तद्व्यपदेशात् । इत्थं ब्रह्मविदः पुरुषधौरेयस्य पुण्यपापयोः बन्धहेत्वोरभावाद्देहपाते मुक्तिरवश्यं भवत्येवेत्यधिकरणद्वयस्य फलमुक्तं भवति ॥

१०. इतरासंश्लेषाधिकरणम् ।

पूर्वं ज्ञानात् कर्मक्षय उत्सर्गत उक्तः; तस्येह प्रारब्धकर्मव्यतिरिक्तविषयत्वेनापवादः क्रियत इत्युत्सर्गापवादसंगत्येदमाह—

११. अनारब्धाधिकरणम् ।

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अत्र पूर्वपक्षे जीवन्मुक्त्यसिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र अनारब्धकर्मवत् आरब्धे पुण्यपापे ज्ञानान्नश्यतः, उत नेति विशये, 'क्षीयन्ते चास्य कर्माणि' इत्यविशेषेण श्रवणान्नश्यतः इति पूर्वः पक्षः । सिद्धान्तस्तु— आरब्धे पुण्यपापे न नश्यतः, प्रवृत्तफलत्वात् मुक्तेषुवत्; अपि त्वनारब्धकार्ये अप्रवृत्तफले पूर्वे अनादिभवपरम्परायां ज्ञानोत्पत्तिपर्यन्तं संचिते पुण्यपापे ते एव ज्ञानान्नश्यतः । कुतः, तदवधेः, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति देहपातावधिश्रवणादित्यर्थः । एवं च विशेषश्रुत्यनुरोधादविशेषश्रुतिर्नेतव्येति भावः ॥

पूर्वमनारब्धकार्याणां कर्मणां ज्ञानात् क्षय उत्सर्गत उक्तः; तस्येह नित्यनैमित्तिकातिरिक्तानारब्धकर्मविषयत्वेनापवादः क्रियत इत्युत्सर्गापवादसंगत्येदमाह—

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

अत्र पूर्वपक्षे ज्ञानार्थं नित्याद्यनुष्ठानासिद्धिः, सिद्धान्ते तदर्थं तत्सिद्धिरिति फलभेदः । अत्र किं नित्यनैमित्तिककर्म-

जातं ज्ञानात्क्षीयते न वेति संदेहे, अनारब्धकर्मत्वाविशेषात् क्षीयत इति पूर्वः पक्षः । सिद्धान्तस्तु—नित्यनैमित्तिकमग्निहोत्रादिकर्मजातं तत्कार्यायैव चित्तशुद्ध्यादिपरंपरया तस्य ज्ञानस्यैव यत्कार्यं मुक्तिरूपं तस्मा एव । कस्मात् , तद्दर्शनात् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति यज्ञादिश्रुतौ ज्ञानहेतुत्वदर्शनादित्यर्थः । एवं च ज्ञानरूपफलैकनाश्यत्वं नित्यनैमित्तिककर्मजातस्य, न काम्यकर्मवन्नाश इति भावः ॥

१२. अग्निहोत्राद्यधिकरणम् ।

ननु नित्यादेर्ज्ञानार्थत्वे 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति विनियोगवचनं किंविषयमित्यपेक्षायामाह—

**अतोऽन्यापि ह्येकेषामुभयोः ॥ १७ ॥**

अतः अग्निहोत्रादेः कर्मणः अन्याप्यस्ति काम्यलक्षणा साधुकृत्या पापकृत्या च ; एकेषां शाखिनां तयोर्विनियोग एष उक्तः । काम्यनिषिद्धकर्मणोर्विद्यां प्रत्यनङ्गत्वे संप्रतिपत्तिरुभयोर्जैमिनिबादरायणयोरिति ॥

पूर्वोक्तनित्यादिकं विषयमुपजीव्य किंचिद्विचार्यत इत्येकविषयत्वसंगत्येदमाह—

## यदेव विद्ययेति हि ॥ १८ ॥

अत्र पूर्वपक्षे केवलस्य नित्यादेः ज्ञानहेतुत्वासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। तत्र किं नित्यादिकमङ्गाश्रितोपास्तिसहितमेवानुष्ठेयमिति नियमः, किं वा तत्सहितं केवलं वेत्यनियम इति संदेहे, नियम इति पूर्वः पक्षः। सिद्धान्तस्तु—अनियम एव युक्तः। तथाहि—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति श्रुतिः विद्यासहितस्य कर्मणः वीर्यवत्तरत्वं ब्रुवती विद्याहीनस्य कर्मणो वीर्यवत्त्वं दर्शयति। तच्च केवलस्य कर्मणो ज्ञानहेतुत्वे उक्तं स्यादित्यर्थः॥

१३. विद्याज्ञानसाधनत्वाधिकरणम्।

पूर्वमनारब्धकर्मणः क्षयोक्तौ आरब्धस्य कथं क्षय इत्याकाङ्क्षायाम्, अस्योत्थानादुत्थाप्योत्थापकलक्षणसंगत्येदमाह—

## भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥

अत्र पूर्वपक्षे विदेहकैवल्यासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। तत्त्वविदत्र विषयः; स किं प्रारब्धक्षयानन्तरं संसरति, उत नेति संदेहे, देहपातात्पूर्वं संसारानुवृत्तिवत् देहपातानन्तरमपि ब्रह्मवित् संसरतीत्यनारब्धाधिकरणदृष्टान्तेन पूर्वः पक्षः।

१४. इतरक्षपणाधिकरणम्।

सिद्धान्तस्तु— इतरे त्वारब्धपुण्यपापे भोगेन क्षपयित्वा विद्वान् संपद्यते, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति, 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यादिश्रुतिभ्यः। देहपातात्पूर्वं प्रारब्धकर्मणां सत्त्वात्, कुलालचक्रभ्रमणन्यायेन मिथ्याज्ञानरूपनिमित्तनाशेऽप्यनुवृत्तिर्युक्ता ; तद्भोगानन्तरं कस्यचिदपि कर्मणोऽभावान्न संसारानुवृत्तिः। तस्माद्भोगेन प्रारब्धकर्मनाशानन्तरं विद्वान् स्वरूपानन्दात्मनावस्थानलक्षणं कैवल्यं लभत इत्यतिशोभनम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्व-
प्रकाशिकायां चतुर्थस्याध्यायस्य
**प्रथमः पादः ॥**



ॐ

## द्वितीयः पादः ॥



पूर्वपादे मुक्तिविरुद्धानारब्धकार्यकर्मनिवृत्त्या जीवन्मुक्तत्वम्, आरब्धकर्मनिवृत्तौ तु विदेहमुक्तत्वमिति सगुणनिर्गुणविद्ययोः फलं सामान्यतो निरूपितम्। संप्रति प्रारब्धकर्मक्षयानन्तरभाविनि मोक्षे विशेषप्रदर्शनाय पादत्रयमारभ्यते। एवं च सामान्यनिरूपणस्य विशेषनिरूपणहेतुत्वात् पूर्वेणास्य पादत्रयस्य हेतुहेतुमद्भावसंगतिः। तत्र उत्क्रान्त्यपेक्षानपेक्षालक्षणविशेषं निरूपयितुमयं पाद आरभ्यते—

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

पादान्तरत्वादस्याधिकरणस्य नाव्यवहिताधिकरणसंगत्यपेक्षा। अत्र पूर्वपक्षे स्वोपादाने स्वस्य लय इति न्यायासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। अस्त्युत्क्रान्तिक्रमबोधिका श्रुतिः— 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' इति। तत्र 'वाङ्मनसि

१. वागधिकरणम्।

संपद्यते' इत्यत्र किं सवृत्तिकाया वाच एव मनसि लयः, किं वा वाग्वृत्तेरेवेति संशये, श्रुतिबलाद्वाच एवेति पूर्वः पक्षः। सिद्धान्तस्तु — उक्तिर्वागिति भावव्युत्पत्त्या वाक्छब्देन वाग्वृत्तिरुच्यते। मनोवृत्तौ सत्यामेव मनसि वाग्वृत्तिर्लीयते। कुतः, दर्शनात् मनोवृत्तौ सत्यामेव लोके वाग्वृत्तिलयस्य दर्शनात्। तर्हि वाक्छब्दस्य का गतिरत आह। शब्दाच्च तस्य वाक्छब्दस्य वृत्तिवृत्तिमतोरभेदोपचारेण भावव्युत्पत्त्या वा वाग्वृत्तिपरत्वेन नयनादित्यर्थः॥

उक्तन्यायं चक्षुरादिष्वतिदिशति—

**अत एव च सर्वाण्यनु॥ २॥**

अत एव उक्तदर्शनादिहेतोः सर्वाणि चक्षुरादीन्द्रियाण्यपि सवृत्तिके मनसि वृत्तिलयमात्रेणानुवर्तन्ते लीयन्ते, न स्वरूपेणेत्यर्थः॥

पूर्वं मनसि सर्वेन्द्रियवृत्तिलय उक्तः, न तथा मनसः प्राणे वृत्तिलयः; 'अन्नमयं हि सोम्य मन आपोमयः प्राणः' इति श्रुतौ प्राणमनसोरबन्नविकारत्वश्रवणादबन्नयोश्चोपादानोपादेयभावात् स्वरूपलय इति प्रत्युदाहरणसंगत्येदमाह—

**तन्मनः प्राण उत्तरात्॥ ३॥**

फलं पूर्ववत् । 'मनः प्राणे' इत्युत्तरवाक्ये, किं मनसः प्राणे स्वरूपलयः, वृत्तिलयो वेति संशये, स्वरूपलय इति पूर्वः पक्षः । सिद्धान्तस्तु— तत् सर्वेन्द्रियवृत्तिलयाधारं मनोऽपि प्राणे स्ववृत्तिलयेनैव लीयते, न स्वरूपेणेति 'मनः प्राणे' इत्युत्तराद्वाक्यादवगन्तव्यम् । सुप्तिमृत्यवस्थयोः सवृत्तिके प्राणे सत्येव मनोवृत्तिलयदर्शनादिति हेत्वनुषङ्गः । न ह्यबन्नयोरुपादानोपादेयत्वमात्रेण तद्विकारयोरप्युपादानोपादेयभावो युक्तः, हिमघटयोस्तददर्शनादिति भावः ॥

२. मनोधिकरणम् ।

पूर्वं प्राणे मनसो वृत्तिलय उक्तः; तद्वत्तेजसि प्राणस्य वृत्तिलयोऽस्तु, 'प्राणस्तेजसि' इति श्रुतेरिति दृष्टान्तसंगत्येदमाह—

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

अत्र पूर्वपक्षे तेजःशब्दस्य मुख्यत्वम्, सिद्धान्ते भूतोपहितजीवलक्षकत्वमिति फलभेदः । 'प्राणस्तेजसि' इत्युत्तरवाक्ये किं प्राणस्य लयः तेजसि, उत जीवे इति संशये, तेजसीति पूर्वः पक्षः । सिद्धान्तस्तु— स प्राणः अध्यक्षे जीवे निवृत्तवृत्तिः सन्नवतिष्ठते । कुतः, तं जीवं प्रति उपगमानुगमनावस्थानेभ्यः; 'एवमे-

३. अध्यक्षाधिकरणम् ।

वेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति ' इत्युपगमः, ' तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ' इत्यनुगमनम्, ' सविज्ञानो भवति ' इत्यवस्थानम, तेभ्य इत्यर्थः ॥

तर्हि ' प्राणस्तेजसि ' इति श्रुतेः कोऽर्थस्तत्राह—

**भूतेषु तच्छ्रुतेः ॥ ५ ॥**

' प्राणस्तेजसि ' इति श्रुतेः तेजःसहितेषु उत्तरदेहारम्भकेषु पञ्चभूतेपूपहिततत्त्वेन विद्यमाने जीवे प्राणस्य वृत्तिलय इत्यर्थः । एवं च प्राणस्य उपहितजीवप्राप्तावुपाधितेजआदिभूतप्राप्तेः स्वतः सिद्धत्वादिति भावः ॥

ननु ' प्राणस्तेजसि ' इत्येकस्यैव तेजसः श्रवणात् कथं तेजःसहितेषु भूतेष्वित्युक्तम, तत्राह—

**नैकस्मिन्दर्शयतो हि ॥ ६ ॥**

एकस्मिन्नेव तेजसि उत्क्रान्तिसमये जीवो नावतिष्ठते, उत्तरदेहस्य पाञ्चभौतिकत्वेन पञ्चसु भूतेष्ववस्थितेरावश्यकत्वात् । दर्शयतो हि इममर्थं रंहत्यधिकरणे व्याख्याते प्रश्ननिरूपणे इत्यर्थः ॥

पूर्वोक्तोत्क्रान्तिमुपजीव्यान्यत्किंचिद्विचार्यत इत्युपजीव्योपजीवकभावसंगत्येदमाह—

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

अत्र पूर्वपक्षे दहराद्युपासकस्य उत्क्रान्त्यभावादिहैव मुक्तिः, सिद्धान्ते तु उत्क्रान्तिसद्भावात् ब्रह्मलोकप्राप्तिरिति फलभेदः।

४ आसृत्युपक्रमाधिकरणम्। किं उत्क्रान्तिरविदुष एव, उत दहरादिसगुणब्रह्मोपासकस्यापि इति संशये, 'तयोर्ध्वमायन्न मृतत्वमेति' इत्युपासकस्य मोक्षश्रवणात् अविदुष एवेति पूर्वः पक्षः। सिद्धान्तस्तु— आसृत्युपक्रमात् देवयानोपक्रमात् प्राक् येयम् उत्क्रान्तिः सा विद्वदविदुषोः समानैव भवितुमर्हति। कुतः, वाङ्मनसीत्याद्यविशेषश्रवणात्। ननु कथं तर्हि सगुणविद्यायाम् अमृतत्वश्रवणमिति तत्राह— अमृतत्वं चानुपोष्य। अनुपोष्य अदग्ध्वा अत्यन्तमविद्याक्लेशजालम्, एतदमृतत्वमापेक्षिकमित्यर्थः॥

ननूत्क्रान्तिः समानेत्ययुक्तम्, मृतस्य स्वरूपत एवात्यन्तं ब्रह्मसंपत्तेरित्याक्षेपसंगत्येदमाह—

## तदापीतेः संसारव्यपदेशात् ॥ ८ ॥

अत्र पूर्वपक्षे मृतमात्रस्य मुक्तिः, सिद्धान्ते तदभाव इति फलभेदः। 'तेजः परस्यां देवतायाम्' इत्यत्र साध्यक्षं भूतान्तरसहितं तेजः परमात्मनि संपद्यत इति तेजसो लयः

श्रूयते । स किं आत्यन्तिकः, उत अनात्यन्तिक इति संशये, परमात्मनः सर्वोपादानत्वात् तत्रात्यन्तिक एव लय इति पूर्वः पक्षः । सिद्धान्तस्तु— तत् यथोदीरितं तेजः आ अपीतेः आ मोक्षादवतिष्ठते । कुतः, 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः' इत्यादिना संसारव्यपदेशात् ; अन्यथा पुनः संसाराभावः प्रसज्येत । तस्मात् सुषुप्ताविव नात्यन्तिकलय इति सिद्धम् ॥

५. संसारव्यपदेशाधिकरणम् ।

ननूक्तलक्षणं तेजो यद्यस्ति, तर्हि पार्श्वस्थैरुपलभ्येतेत्यत आह—

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

यथोक्तं तेजः प्रमाणतः चकारात् स्वरूपतश्च त्रसरेणुवत् सूक्ष्मम् ; तस्य नाडीद्वारा निष्क्रमणश्रुत्या तथा सूक्ष्मत्वस्योपलब्धेरित्यर्थः ॥

**नोपमर्देनातः ॥ १० ॥**

अतः सूक्ष्मत्वादेव शरीरोपमर्देन स्वयं नोपमृद्यत इत्यर्थः ॥

सूक्ष्मतेजःसद्भावे औष्ण्यलिङ्गकमनुमानमाह—

**अस्यैव चोपपत्तेरेष ऊष्मा ॥ ११ ॥**

स्थूलदेहे एष उपलभ्यमानः ऊष्मा अस्यैव सूक्ष्मतेजस

एव धर्मः, सत्येव तस्मिन् तदुपलब्धेः तदभावे मृतदेहे तद-
नुपलब्धेरित्यन्वयव्यतिरेकाभ्यां तद्धर्मत्वस्यैवोपपत्तेरित्यर्थः ॥

आसृत्युपक्रमाधिकरणे मुख्यामृतत्वे उत्क्रान्त्यभावोऽव-
गतः । स न युक्त इत्याक्षेपसंगत्येदमाह—

**प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥**

नाव्यवहितेनास्य संगत्यपेक्षा । अत्र पूर्वपक्षे निर्गुणब्रह्म-
विदोऽपि ब्रह्मलोकप्राप्तिः, सिद्धान्ते त्विहैव मुक्तिरिति फल-

६. प्रतिषेधाधिकरणम् ।

भेदः । निर्गुणब्रह्मविदत्र विषयः; किं तस्यो-
त्क्रान्तिरस्ति न वेति संशये, अस्त्युत्क्रान्तिः ।
ननु नास्त्युत्क्रान्तिः 'न तस्य प्राणा उत्क्रामन्ति' इति निर्गु-
णब्रह्मविदः शरीरात् प्राणोत्क्रान्तिप्रतिषेधादिति चेत्, न ।
शारीराज्जीवादयमुत्क्रान्तिप्रतिषेधः, न शरीरात् । 'न तस्मा-
त्प्राणा उत्क्रामन्ति' इति माध्यंदिनशाखायां जीवादेव प्राणो-
त्क्रान्तिप्रतिषेधस्य कृतत्वात् । अतः प्राणादिसहितस्य जीवस्य
परब्रह्मविदोऽप्यस्त्युत्क्रान्तिरिति पूर्वः पक्षः ॥

सिद्धान्तस्तु—

**स्पष्टो ह्येकेषाम् ॥ १३ ॥**

एकेषां काण्वानां शाखायां प्राणानां परब्रह्मविदः देहादु-

त्क्रान्तिप्रतिषेधः स्पष्टः। हि यतः उपलभ्यते, अतः न तस्यो-
त्क्रान्तिः, अपि त्वत्रैव लयः। अन्यथा अनुत्क्रान्तानां प्राणानां
देहे अवस्थाने 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते'
इत्युत्क्रान्त्यवधेर्देहस्योच्छूनत्वादिलिङ्गं बाध्येत । तत्सामा-
न्यात् माध्यंदिनशाखायामपि तस्मादित्यनेन देहस्यैव ग्रहणं
बोध्यम् । तस्माद्विद्वद्देहादेव प्राणोत्क्रान्तिप्रतिषेध इति ॥

किं च––

## स्मर्यते च ॥ १४ ॥

महाभारते 'देवापि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः' इति
विदुष उत्क्रान्त्यभावः स्मर्यत इत्यर्थः ॥

ननु ब्रह्मणि लय इत्ययुक्तम् , 'गताः कलाः पञ्चदश
प्रतिष्ठाः' इति विद्वद्विषयश्रुत्यैव पृथिव्यादिषु लयश्रवणादि-
त्याक्षेपसंगत्येदमाह––

## तानि परे तथाह्याह ॥ १५ ॥

पूर्वाधिकरणाक्षेपरूपत्वादस्य तत्फलं द्रष्टव्यम् । अत्र किं
ब्रह्मविदः प्राणानां लयः पृथिव्यादिषु, उत परब्रह्मणीति वि-
शये, पृथिव्यादिष्विति पूर्वः पक्षः । सि-
द्धान्तस्तु–– तानि यथोक्तानि प्राणाख्या-

७. वागादिलयाधिकरणम् ।

नीन्द्रियाणि परे ब्रह्मणि लीयन्ते । तथा ह्याह श्रुतिः— ‘एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति’ इति । न च पूर्वश्रुतिविरोधः । स्वोपादानेषु पृथिव्यादिषु प्रलीनाः कलाः प्राणाः स्वोपादानैः सह परब्रह्मण्यस्तं गच्छन्तीति श्रुतिद्वयतात्पर्यम् ॥

पूर्वोक्तविद्वत्कला विषयीकृत्यान्यत्किंचिद्विचार्यत इति एकविषयत्वसंगत्येदमाह—

## अविभागो वचनात् ॥ १६ ॥

अत्र पूर्वपक्षे मोक्षासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । विद्वत्कलालयः किमविदुष इवानात्यन्तिकः, उत आत्यन्तिक इति संदेहे, अनात्यन्तिक इति पूर्वः पक्षः । सिद्धान्तस्तु—विद्वत्कलानां ब्रह्मणा सहात्यन्तमविभाग एव, न सावशेषो लयः । कुतः, कलानां लयोक्त्यनन्तरं ‘भिद्येते चासां नामरूपे’ इति कलानां शक्त्यात्मकनामरूपयोः पुरुषे लयमुक्त्वा ‘स एषोऽकलोऽमृतो भवति’ इति वचनादित्यर्थः । अविदुषस्तु जन्मान्तरसिद्ध्यर्थम् अनात्यन्तिकलयो युक्तः, न विदुषः; तस्य तदभावादिति भावः ॥

८. अविभागाधिकरणम् ।

स्थितेयं परविद्याचिन्ता। पूर्वमासृत्युपक्रमाधिकरणे सगुणब्रह्मविदां येयमुत्क्रान्तिः, सेयमितरोत्क्रान्त्या मार्गोपक्रमपर्यन्तं समेत्युक्तम । तद्वन्मार्गोपक्रमेऽपि समैवास्तु 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा' इति हृत्प्रद्योतनादेः समत्वश्रवणादिति दृष्टान्तसंगत्येदमाह—

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ १७॥

अत्र पूर्वपक्षे विद्याधिकृतातिशयासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः । अत्र किमुपासकोऽप्यनुपासकवत् येन केनचिद्द्वारेण निष्क्रामति, उत मूर्धन्यनाड्येति विशये, येन केनचिदिति पूर्वः पक्षः । सिद्धान्तस्तु— तदोकोग्रज्वलनं तस्य लीनवृत्तिकवागादिसमुदायस्योत्क्रमिष्यतो जीवस्य ओकः आयतनं हृदयं तस्य यदग्रं तस्य ज्वलनं प्राप्तव्यज्ञानरूपं प्रद्योतनाख्यम् आदौ भवति; तेन प्रद्योतेन प्रकाशितद्वारः विद्वानविद्वांश्च भवति । तत्र अविद्वान स्थानान्तरेभ्यो निष्क्रामति, विद्वांस्तु मूर्धस्थानादेव । कुतः, विद्यासामर्थ्यात् , यदि विद्वानपि इतरवत्स्थाना-

९. तदोकाधिकरणम् ।

न्तरेभ्यो निष्क्रामेत् नैवोत्कृष्टं फलं लभेत । ननु स्थानान्तरेभ्योऽप्युत्क्रामन्नुत्कृष्टं फलमाप्नुयादिति चेत्, नेत्याह—
तच्छेषगत्यनुस्मृतियोगाच्च । तस्याः सगुणविद्यायाः शेषभूता या गतिः मूर्धन्यनाडीसृतिः तस्या अनुस्मृतिर्ध्यानं तद्योगात्तद्विधानाच्च । यदि स्थानान्तरेभ्यो निष्क्रामतोऽपि विशिष्टफलप्राप्तिः स्यात्, तर्हि विशिष्टगतिचिन्तनविधानं व्यर्थमेव स्यात् । अतो दीर्घकालनैरन्तर्यसत्कारैर्दृढमासेवितेन हार्देन ब्रह्मणानुगृहीतस्तद्भावमापन्नो विद्वान् मूर्धन्ययैव शताद्धिकया नाड्या निष्क्रामति । तथा च श्रुतिः— 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति ॥

पूर्वोक्तनाडीसंबद्धरश्मीनत्रोपजीव्य किंचिद्विचार्यत इत्युपजीव्योपजीवकभावसंगत्येदमाह—

## रश्म्यनुसारी ॥ १८ ॥

अत्र पूर्वपक्षे रात्रौ मृतस्य रश्मिप्राप्त्यर्थं सूर्योदयप्रतीक्षास्ति, सिद्धान्ते नास्तीति फलभेदः । अत्र 'अथैतैरेव रश्मिभिरूर्ध्वम् आक्रमते' इति मूर्धन्यनाड्या निर्गतस्य रश्मिसंबन्धः श्रूयते । तत्र किं रश्म्यनुसारित्वम् अहनि मृतस्यैव, उत रात्रावपीति संदेहे, अह-

१०. रश्म्यधिकरणम् ।

न्येवेति पूर्वः पक्षः। सिद्धान्तस्तु— अहनि रात्रौ वा मृतः रश्म्यनुसारी भवतीति॥

पूर्वपक्षबीजमुपन्यस्य दूषयति—

**निशि नेति चेन्न संबन्धस्य यावद्देह-भावित्वाद्दर्शयति च॥ १९॥**

अहनि सूर्यरश्मिनाडीसंबन्धस्य सत्त्वात्तत्रैव मृतो रश्म्यनुसारी भवति। निशि तु न तदसत्त्वादिति चेत्, न; नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात्। दर्शयति च श्रुतिः— 'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ताः आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः' इति। तस्मान्निश्यपि मृतो रश्म्यनुसारीति सिद्धम्॥

उक्तन्यायमन्यत्रातिदिशति—

**अतश्चायनेऽपि दक्षिणे॥ २०॥**

अस्यातिदेशत्वान्न पृथक्संगत्यपेक्षा। अत्र पूर्वपक्षे दक्षिणायने मृतस्य फलाभावादुत्तरायणार्थं प्रयत्नापेक्षा, सिद्धान्ते हेत्वसिद्धेस्तदनपेक्षेति फलभेदः। किं दक्षिणायने मृतो विद्वान् विद्याफलं प्राप्नोति, न वेति विशये, उत्तरायणप्रा-

शस्त्यप्रसिद्धेर्भीष्मस्य तत्प्रतीक्षास्मरणाच्च न प्राप्नोतीति पूर्वः पक्षः। सिद्धान्तस्तु— अत एव कालान्तरप्रतीक्षानुपपत्तेः विद्यायाः नित्यवत्फलसंबन्धश्रवणाच्च दक्षिणेऽप्ययने मृतो विद्वान् फलं प्राप्नोत्येवेत्यर्थः। प्राशस्त्यप्रसिद्धिरविद्वद्विषया। भीष्मस्य च प्रतीक्षापरिपालनम् आचारपरिपालनार्थम्, पितृप्रसादलब्धस्वेच्छामरणज्ञापनार्थं वेति भावः॥

११. दाक्षिणायनाधिकरणम्।

ननु 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः। प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ॥ अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' इति स्मृतिविरोधात् कथं रात्रौ दक्षिणायने वा मृतस्य अनावृत्तिः स्यादित्याशङ्क्याह—

**योगिनः प्रति च स्मर्यते स्मार्ते चैते॥ २१॥**

योगिनः स्मार्तविद्योपासकान् प्रति अयमहरादिकालविशेषः स्मर्यते, स्मार्तत्वप्रत्यासत्तेः; न श्रौतदहराद्युपासकान्प्रति। ननु योगिनो दहराद्युपासका एव स्मृत्युक्ताः किं न स्युरित्यत आह—स्मार्ते चैते। ब्रह्मार्पणबुद्ध्यानुष्ठितं कर्म योगः, 'अनाश्रितः कर्मफलम्' इत्यादिस्मृतेः। धारणापूर्वकाकर्तृत्वानुभवः

सांख्यः, 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्' इति स्मृतेः । एवं चैते योगसांख्ये स्मार्ते एव, न श्रौते । तथा च श्रुतिस्मृत्योरर्थभेदान्न श्रौतोपास्तिषु कालनियमः । यदि श्रौतार्थप्रत्यभिज्ञया कालशब्दस्तदभिमानिदेवतापरः, तर्ह्यैकार्थ्यमेवेत्यनवद्यम् । तस्माद्विद्वान सर्वदैव मृतः विद्याफलमाप्नोतीत्यतिशोभनम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्व-
प्रकाशिकायां चतुर्थाध्यायस्य
द्वितीयः पादः ॥



ॐ

# तृतीयः पादः ॥

इत्थमुत्क्रान्तिं निरूप्य तत्साध्यमार्गं निरूपयितुमिमं पादमारभते। पूर्वं यदाकदाचिन्मृतस्यापि फलप्राप्तिरुक्ता ; तद्वत् येन केनचिन्मार्गेण गतिरिति दृष्टान्तसंगत्येदमधिकरणमारभते—

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

अत्र पूर्वपक्षे मार्गविकल्पः, सिद्धान्ते मार्गैक्यमिति फलभेदः । अस्ति ब्रह्मलोकप्राप्तिहेतौ मार्गे श्रुतीनां विप्रतिपत्तिः ।

१. आर्चिराद्यधिकरणम् ।

तत्र क्वचित् 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' इति रश्मिरूपो मार्गः श्रूयते ; क्वचित् 'तेऽर्चिषमभिसंभवन्ति' इत्यर्चिरादिरूपः । तत्र किं परस्परविभिन्ना एवैते मार्गाः, उतानेकविशेषणयुक्त एक एवेति विशये, प्रकरणभेदात् परस्परविभिन्ना एवेति पूर्वः पक्षः । सिद्धान्तस्तु— सर्वो हि ब्रह्मलोकप्रेप्सुरर्चिरादिनैकेन मार्गेण गन्तुमर्हति । कुतः, तत्प्रथितेः तस्य अर्चिरादिमार्गस्य पञ्चाग्निविद्याप्रकरणे 'ये चेमे अरण्ये श्रद्धा तप इत्युपासते तेऽ-

र्चिषमभिसंभवन्ति' इति पञ्चाग्न्युपासकस्येव इतरस्यापि सगुणब्रह्मोपासकस्य प्रथिते: श्रुतत्वादित्यर्थः । न च प्रकरणभेदान्मार्गभेद इति वाच्यम , सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानात् । गन्तव्यब्रह्मलोकाभेदाच्च सर्वत्र सर्वविशेषणोपसंहारेण अनेकविशेषणयुक्त एक एव मार्ग इत्यनवद्यम् ॥

पूर्वं सर्वत्रार्चिराद्येकदेशप्रत्यभिज्ञानान्मार्गैक्यमित्युक्तम् । तद्वदग्न्यनन्तरं वायुपाठप्रत्यभिज्ञानात् तत्रैव वायुर्निवेशयितव्य इति दृष्टान्तसंगत्येदमाह—

**वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥**

अत्र पूर्वपक्षे पाठक्रमस्यानुसरणम् , सिद्धान्ते तु अर्थक्रमात्तस्य बाध इति फलभेदः । 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्' इति कौषीतकिनः देवयानमार्गमामनन्ति । छन्दोगाश्चैवमेवाधीयते— 'तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान् । मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति' इति । तत्र श्रुतिद्वयेऽप्यग्निरादौ पठितः पश्चात्कौषीतकिश्रुतौ

२. वाय्वधिकरणम् ।

वायुः पठितः । स किं वायुः अर्चिरात्मकाग्नेरनन्तरं निवेशयितव्यः, उत संवत्सरात्परमिति विशये, अग्नेरनन्तरमिति पूर्वः पक्षः । सिद्धान्तस्तु—अब्दात् संवत्सरादनन्तरम् आदित्यादर्वाक् वायुमभिसंविशन्ति । कुतः, अविशेषविशेषाभ्याम्, कौषीतकिश्रुतौ वायोः कुतश्चिदानन्तर्यम् अर्वाक्त्वं वा विशेषो न ज्ञायते तद्वाचकपदाभावात् । बृहदारण्यके तु 'यदा वै पुरुषोऽस्माँल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स उर्ध्वमाक्रमते स आदित्यमागच्छति' इत्यादित्यादर्वाक्त्वं विशेषो दृश्यते । ताभ्याम् अविशेषविशेषाभ्यां संवत्सरादनन्तरं वायुर्निवेशयितव्यः । अग्न्यनन्तरपाठक्रमस्तु ऊर्ध्वशब्दश्रुतिसिद्धार्थक्रमेण बाध्यत इत्यदोषः । यद्यपि बृहदारण्यके मासानन्तरं देवलोकः श्रूयते, तथापि छान्दोग्यश्रुत्या मासानन्तरं संवत्सरो निवेशयितव्यः, तस्य मासावयवित्वेन योग्यत्वात् । अत्रैवं क्रमो निष्पन्नः— मासेभ्यः संवत्सरं संवत्सराद्देवलोकं देवलोकाद्वायुं वायोरादित्यम् आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमिति । एवं च सूत्रे वायुपदं देवलोकोपलक्षकमिति द्रष्टव्यम् ॥

पूर्वमग्न्यनन्तरं श्रुतस्य वायोः स्थानविशेषश्रवणादर्चिरादिमार्गपर्वत्वेन संबन्ध उक्तः । न तथा वरुणादीनां संबन्धः

संभवति स्थानविशेषाश्रवणादिति प्रत्युदाहरणसंगत्येदमाह—

**तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥**

अत्र पूर्वपक्षे वरुणादेः मार्गपर्वत्वेन संबन्धासिद्धिः, सिद्धान्ते तत्सिद्धिरिति फलभेदः। किं कौषीतकिवाक्ये श्रुतः वरुणादिः मार्गपर्वत्वेन संबध्यते न वेति विशये, नेति पूर्वः पक्षः। सिद्धान्तस्तु— तडितः विद्युल्लोकादधि उपरिष्टात् वरुणः संबध्यते। कुतः, संबन्धात् वरुणस्याब्द्वारा विद्युत्संबन्धादित्यर्थः। 'आगन्तुकानामन्ते निवेशः' इति न्यायाद्विद्युदानन्तर्ये सति यथापाठमिन्द्रप्रजापत्योः क्रमो द्रष्टव्यः, बाधकाभावादिति भावः॥

३. तडिदधिकरणम्।

पूर्वं यथा तडिद्वरुणसंबन्धात् तडिदनन्तरं वरुणस्य संबन्ध उक्तः, तद्वदिह लौकिकमार्गचिह्नसारूप्यसंबन्धात् अर्चिरादेः मार्गचिह्नोपदेश इति दृष्टान्तसंगत्येदमाह—

**आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥**

अत्र पूर्वपक्षे उपदेशस्य लोकश्रुतेर्वा मुख्यत्वम्, सिद्धान्ते न्यायवल्लिङ्गस्य मुख्यत्वमिति फलभेदः। अत्र किं तेऽर्चिरादयो मार्गचिह्नभूताः, उत गन्तॄणां भोगभूमयः, उताहो आतिवाहिका इति विशये, अर्चिरादयो वृक्षनद्यादिवत् मार्गचि-

ह्नभूताः। अथवा 'अग्निलोकं वायुलोकम' इत्यादिलोकशब्दश्रुतेः भोगभूमय इति पूर्वः पक्षः। सिद्धान्तस्तु—अर्चिरादयः आतिवाहिकाः कार्यब्रह्मगन्तॄणां गमयितारः। कुतः, तल्लिङ्गात्

४. आतिवाहिकाधिकरणम्।

'तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयति' इत्यमानवपुरुषस्य विद्युल्लोकं प्राप्तानुपासकान प्रति गमयितृत्वश्रवणादित्यर्थः। यत्तु उपदेशस्वारस्यात् चिह्नभूता इति, तन्न; तेषामर्चिरादीनामातिवाहिकत्वे विरोधाभावात्। यत्तु लोकशब्दश्रुतेः भोगभूमय इति, तदपि न; निलीनेन्द्रियाणामुपासकानां भोगायोगात्। अतः अमानवादर्वाचीना अर्चिरादिमानवाः आतिवाहिका इति भावः॥

ननु लिङ्गमात्रं न तेषां नेतृत्वगमकम्, न्यायाभावादित्यत आह—

**उभयव्यामोहात्तत्सिद्धेः॥ ५॥**

यद्यर्चिरादयोऽचेतनाः, तर्हि मार्गतद्गन्त्रोः उभयोरपि व्यामोहात् अज्ञत्वादूर्ध्वगतिर्न स्यात्। अतः स्वयं प्रयत्नशून्यश्चेतनान्तरेण नेय इति लौकिकन्यायानुगृहीताल्लिङ्गात् तत्सिद्धेः नेतृत्वसिद्धेरित्यर्थः॥

ननु विद्युल्लोकादमानवस्यैव नेतृत्वश्रवणात् कथं वरुणा-

दीनां नेतृत्वमित्यत आह—

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥**

अमानवः पुरुषो विद्युल्लोकमागतः वैद्युतस्तेनैव, ततः विद्युल्लोकप्राप्तेरूर्ध्वं नीयमाना उपासकाः कार्यब्रह्म प्राप्नुवन्ति, 'अमानवः स एत्य ब्रह्मलोकं गमयति' इत्यमानवस्यैव गमयितृत्वश्रवणात्। वरुणादीनां तु अमानवोपसर्जनत्वेन नेतृत्वम्, न प्राधान्येन । अतः अर्चिरादयो नेतार इति सिद्धम् ॥

इत्थं गन्तव्यप्राप्तिहेतुं मार्गं निरूप्य फलभूतं गन्तव्यं निरूपयतीति फलफलिभावसंगत्येदमाह—

**कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥**

अत्र पूर्वपक्षे मार्गस्य मुक्त्यर्थता, सिद्धान्ते भोगार्थतेति फलभेदः । 'स एनान ब्रह्म गमयति' इत्यत्र किं परं ब्रह्म गन्तव्यम्, उत कार्यं ब्रह्मेति संशये, परं ब्रह्मेति पूर्वः पक्षः । सिद्धान्तस्तु— कार्यमेव ब्रह्म गन्तव्यमिति बादरिराचार्यो मन्यते । कुतः, अस्य कार्यस्य ब्रह्मणः परिच्छिन्नस्य गत्युपपत्तेः गन्तव्यत्वोपपत्तेरित्यर्थः ॥

२. कार्याधिकरणम् ।

**विशेषितत्वाच्च ॥ ८ ॥**

'ब्रह्मलोकान्गमयति' इति श्रुत्यन्तरे बहुवचनेन गन्तव्यब्रह्मणः विशेषितत्वात्, न परस्येति चकारार्थः ॥

ननु नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् कथं कार्यब्रह्मणि तद्व्यपदेशः; तत्र आह—

**सामीप्यात्तु तद्व्यपदेशः ॥ ९ ॥**

तुश्चोद्यनिरासार्थः । परमेव हि ब्रह्म सत्यकामत्वादिगुणयुक्तं कार्यं ब्रह्मेति कथ्यते । तथा च कार्यब्रह्मणः कारणब्रह्मसामीप्यात् कारणे मुख्यस्य ब्रह्मशब्दस्य कार्ये व्यपदेशः लक्षणया प्रयोग इत्यर्थः । मुख्याभावादिति भावः ॥

ननु कार्यब्रह्मप्राप्तौ कथं तेषां न पुनरावृत्तिः, इतरथा श्रुतिविरोधः; तत्र आह—

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ १० ॥**

कार्यब्रह्मलोकस्यात्यये नाशे सति तदध्यक्षेण तल्लोकस्वामिना हिरण्यगर्भेण सह अतः कार्याद्ब्रह्मणः परं ब्रह्म प्राप्नुवन्ति उत्पन्नात्मसाक्षात्कारा विद्वांस इत्यनावृत्तिश्रुत्यभिधानादवगन्तव्यमित्यर्थः ॥

**स्मृतेश्च ॥ ११ ॥**

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति स्मृतेरपि ब्रह्मलोकं प्राप्ताः क्रमेण मुक्तिं प्राप्नुवन्तीत्यवगन्तव्यमित्यर्थः ॥

इत्थं सिद्धान्तमभिधाय पूर्वपक्षमाह—

**परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥**

नपुंसकब्रह्मशब्दस्य परस्मिन्नेव मुख्यत्वात् परमेव ब्रह्म गमयत्यमानव इति जैमिनिराचार्यो मन्यत इत्यर्थः ॥

**दर्शनाच्च ॥ १३ ॥**

'तयोर्ध्वमायन्नमृतत्वमेति' इति मुक्तेर्गतिपूर्वकत्वदर्शनाच्च परमेव गमयतीत्यर्थः ॥

अपि च—

**न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥**

'प्रजापतेः सभां वेश्म प्रपद्ये' इत्ययं प्रतिप्रत्त्यभिसंधिः वेश्मप्राप्तिसंकल्पः न कार्ये कार्यब्रह्मविषयको न भवति, अपि तु परब्रह्मविषयक एव ; 'ते यदन्तरा तद्ब्रह्म' इति परस्यैव प्रकृतत्वादिति पूर्वः पक्षः । अस्मिन्पक्षे मुख्यत्वाद्दर्शनाच्चेति हेतुद्वयमर्वागेवादूषि । यत्तु प्रकरणाद्वेश्मप्राप्तिसंकल्पः परविषय इति, तन्न ; 'प्रजापतेः सभां वेश्म प्रपद्ये' इति वाक्य-

श्रुतिभ्यां दुर्बलप्रकरणविच्छेदेन वेश्मप्राप्तिसंकल्पस्य कार्यब्रह्मविषयकत्वावगमात् । अतः कार्यं ब्रह्मैव गन्तव्यमिति सिद्धम् ॥

इत्थं अर्चिरादिगन्तव्यं निरूप्य गन्तॄणां बुद्धिस्थत्वात् बुद्धिस्थत्वसंगत्या तान्निरूपयितुमिदमाह—

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथादोषात्तत्क्रतुश्च ॥ १५ ॥**

अत्र पूर्वपक्षे उपासकमात्रस्योत्तरमार्गसिद्धिः, सिद्धान्ते तु उभयथाभावसिद्धिरिति फलभेदः । किममानवः पुरुषः सर्वा-

६. अप्रतीकालम्बनाधिकरणम् ।

नुपासकान ब्रह्मलोकं नयति, उत अप्रतीकालम्बनानिति संदेहे, नियामकाभावात् सर्वानिति पूर्वः पक्षः । सिद्धान्तस्तु—अप्रतीकालम्बनान् प्रतीकोपासकभिन्नानुपासकान्नयत्यमानव इति बादरायणाचार्यो मन्यते । ननु तर्हि 'अनियमः सर्वासाम्' इत्यत्र सर्वोपासनेषु मार्गोपसंहारः कृतः, तद्विरोध इत्यत आह— उभयथादोषात् कांश्चिदुपासकान्नयति, कांश्चिन्नेति उभयथाभ्युपगमे अदोषात् दोषाभावात्; अनियमन्यायस्य प्रतीकभिन्नविषयकत्वान्न तद्विरोधः । अत्र नियामकमाह— तत्क्रतुश्च तस्य कार्यब्रह्मणः क्रतुरुपासनं यस्य स तत्क्रतुः उपासकः;

एवं च यो यद्विषयकोपासकः स तत्प्राप्नोति इति श्रुतिस्मृतिसिद्धत्वात्तदुपासकानामेव कार्यब्रह्मप्राप्तिः; प्रतीकोपासनेषु 'नाम ब्रह्म' इत्यादिषु ब्रह्मणः प्रतीकं प्रति विशेषणत्वेन प्रतीकस्यैव प्राधान्यात् न तदुपासकानां ब्रह्मप्राप्तिः; पञ्चाग्न्युपासकानां चाब्रह्मोपासकत्वेऽपि श्रुतिबलात् ब्रह्मप्राप्तिरिति विवेकः ॥

अपि च—

**विशेषं च दर्शयति ॥ १६ ॥**

'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' इति नामप्रतीकोपासनफलादुत्तरोत्तरवागाद्युपासनानामुत्कृष्टफलविशेषं दर्शयति— 'वाग्वाव नाम्नो भूयसी' इत्याद्या श्रुतिः । अयं च फलविशेषः प्रतीकानामुत्कर्षापकर्षवतामुपास्यत्वे युज्यते, न तु सर्वत्रैकरूपस्य ब्रह्मण उपास्यत्वे । तस्माद्ब्रह्मोपासकानामेव ब्रह्मप्राप्तिः, न प्रतीकोपासकानामिति सिद्धम् ॥

इति श्रीब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्व-
प्रकाशिकायां चतुर्थाध्यायस्य
तृतीयः पादः ॥



ॐ

## चतुर्थः पादः ॥

इत्थं पूर्वस्मिन्पादे सगुणब्रह्मोपासकानां कार्यब्रह्मप्राप्तिः कथिता । अधुना निर्गुणब्रह्मविदां तद्भावमभिधातुमयं पाद आरभ्यते—

### संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

पादान्तरत्वादस्य न पूर्वाधिकरणसंगत्यपेक्षा । अत्र पूर्वपक्षे स्वर्गमोक्षयोरविशेषः, सिद्धान्ते विशेष इति फलभेदः ।

१. संपद्याविर्भावाधिकरणम् । 'एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति श्रूयते । तत्र किं स्वर्गादौ सुकृतिन इव निर्गुणब्रह्मविदोऽप्यागन्तुकेन केनचिद्विशेषेणाभिनिष्पत्तिः, उतात्ममात्रेणेति संशये, फलत्वाविशेषात्स्वर्गवदभिनिष्पत्तिरिति पूर्वः पक्षः । सिद्धान्तस्तु— संपद्य स्वप्रकाशमात्मानं साक्षादनुभूय तेनैवात्ममात्रेणाविर्भावो विद्वानाविर्भवति । कुतः, 'स्वेन रूपेणाभिनिष्पद्यते' इति स्वशब्दादित्यर्थः । फलहेतुकानु-

मानं मोक्षनित्यत्वश्रुतिबाधितमिति बोध्यम् ॥

ननु स्वरूपात्मकमोक्षस्य सनातनत्वात् कः पुनः पूर्वावस्थातो विशेषः, अत आह—

**मुक्तः प्रतिज्ञानात्** ॥ २ ॥

पूर्वमवस्थात्रयकलुषितः संसारीवावतिष्ठमानोऽपि सर्वसंसारानर्थव्रातान्मुक्तः परितः प्रद्योतमानपूर्णानन्दात्मनावतिष्ठत इति महानयं विशेषः । कुतः पुनरयमवगम्यते, प्रतिज्ञानात् 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इति सकलानर्थविनिर्मुक्तस्यैवानन्दात्मनो व्याख्येयत्वेन प्रतिज्ञानादित्यर्थः ॥

ननु कार्यं ज्योतिरुपसंपन्नस्य कथं मुक्तत्वम्, अत आह—

**आत्मा प्रकरणात्** ॥ ३ ॥

अत्रात्मैव ज्योतिर्न भौतिकं तेजः, 'य आत्मापहतपाप्मा' इति आत्मप्रकरणादित्यर्थः ॥

यथोक्तमेतदुपजीव्यान्यत्किंचिद्विचार्यत इत्युपजीव्योपजीवकभावसंगत्येदमाह—

**अविभागेन दृष्टत्वात्** ॥ ४ ॥

अत्र पूर्वपक्षे जीवब्रह्मणोरत्यन्तभेदः, सिद्धान्ते तयोरत्यन्ताभेद इति फलभेदः । किं मुक्तो ब्रह्मभिन्नत्वेनावतिष्ठते, उत ब्रह्माभिन्नत्वेनेति संदेहे, 'ज्योतिरुपसंपद्य' इति कर्मकर्तृत्वेन भेदोक्तेः ब्रह्मभिन्नत्वेनेति पूर्वः पक्षः । सिद्धान्तस्तु— अविभागेन निरतिशयानन्दब्रह्मात्मनैवावतिष्ठते । कुतः, दृष्टत्वात् 'ब्रह्मैव सन् ब्रह्माप्येति' 'तत्त्वमसि' इत्यादिश्रुतिष्वभेदस्यैव दृष्टत्वादित्यर्थः । भेदोक्तिरौपचारिकीति भावः ॥

२. अविभागेन दृष्टत्वाधिकरणम् ।

यथोदीरितं ब्रह्माभिन्नं मुक्तमुपजीव्य किंचिद्विचार्यत इत्युपजीव्योपजीवकभावसंगत्येदमाह—

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥**

अत्र तत्तत्पक्षसिद्धिरेव फलं द्रष्टव्यम् । स किं ब्रह्मात्मको मुक्तः सत्येन सर्वज्ञत्वादिना युक्तोऽवतिष्ठते, उत सर्वज्ञत्वादेः शशविषाणवदत्यन्तासत्त्वाच्चिन्मात्रात्मनावतिष्ठते, आहोस्विद्वस्तुतश्चिन्मात्रो जीवान्तरव्यवहारदृष्ट्या कल्पितसर्वज्ञत्वादिमानिवावतिष्ठत इति संदेहे, सत्येन सर्वज्ञत्वादिना युक्तोऽवतिष्ठत इति जैमिनिराचार्यो मन्यते । कुतः, उपन्यासादिभ्यः उपन्यासविधिव्य-

३. ब्राह्माधिकरणम् ।

पदेशेभ्यः। तत्र 'सोऽन्वेष्टव्यः' इति विधानार्थमागतः 'य आत्मापहतपाप्मा' इत्यादिरुपदेश उपन्यासः; 'तस्य सर्वेषु लोकेषु कामचारो भवति' इत्यादिरज्ञातज्ञापको विधिः; 'यः सर्वज्ञः सर्ववित्' इत्यादिर्व्यपदेशः; सोऽयं नोपदेशः, विध्यभावात्; नापि विधिः, सिद्धवन्निर्देशात्; अपि तूभयविलक्षणः। अतस्तेभ्यो हेतुभ्यः सप्रपञ्च एव मुक्तात्मेत्याद्यः पूर्वः पक्षः॥

द्वितीयं पूर्वपक्षमाह—

**चिति तन्मात्रेण तदात्मकत्वा-**
**दित्यौडुलोमिः॥ ६॥**

जीवात्मनः तदात्मकत्वात् चैतन्यात्मकत्वात् चिति तन्मात्रेण चैतन्यात्मनावस्थिते मुक्ते ब्रह्मणि सर्वज्ञत्वादिशब्दा निरर्थका एव प्रयुज्यन्त इत्यौडुलोमिराचार्यो मन्यते, सर्वज्ञत्वादिधर्माणामत्यन्तासत्त्वादिति॥

सिद्धान्तस्तु—

**एवमप्युपन्यासात्पूर्वभावादविरोधं**
**बादरायणः॥ ७॥**

एवमपि पारमार्थिकचैतन्यमात्रस्वरूपाभ्युपगमेऽपि पूर्वोक्तोपन्यासादिभ्यः पूर्वभावात् पूर्वस्य ब्रह्मस्वरूपस्य सर्वज्ञत्वा-

देर्व्यावहारिकस्य भावात् ब्रह्मणो मुक्तात्मनः सप्रपञ्चत्वनिष्प्रपञ्चत्वयोरविरोधं बादरायण आचार्यो मन्यत इत्यर्थः। आविद्यकधर्माणां सर्वज्ञत्वादीनामुपपत्तेर्न तेषां तुच्छत्वमिति भावः ॥

पूर्वत्र ब्रह्मणि विशेषासंभवादविशेषप्रवृत्तापि सविशेषश्रुतिरौपाधिकविषयेति व्यवस्थापिता। न तथेहाविशेषप्रवृत्तमनुमानमयोगिविषये व्यवस्थापनीयम्, योगिन्यपि संकल्पातिरिक्तसाधनसंभवादिति प्रत्युदाहरणसंगत्येदमाह—

## संकल्पादेव तु तच्छ्रुतेः ॥ ८ ॥

अत्र पूर्वपक्षे लोकवृत्तानुसरणं फलम्, सिद्धान्ते तु विद्याबलेन संकल्पस्यैव भोगपुष्टिकरत्वसिद्धिः फलमिति विवेकः। दहरविद्यायां श्रूयते—'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति। तत्र किं ब्रह्मलोकस्थस्य विदुषः संकल्पादेव पित्रादिविभूतिप्राप्तिः, उत यत्नान्तरसहकृतात्तस्मादिति संदेहे, विदुषः संकल्पो यत्नान्तरसापेक्षः भोगसामग्रीसंकल्पत्वात् अस्मदादिसंकल्पवदित्यनुमानेन यत्नान्तरसहकृतसंकल्पाद्विभूतिप्राप्तिरिति पूर्वः पक्षः। सिद्धान्तस्तु—केवलात्संकल्पादेवास्य विदुषः पित्रादिविभूतिप्राप्तिः। कुतः,

४. संकल्पाधिकरणम्।

तच्छ्रुतेः 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति यत्नान्तरनिरपेक्षसत्यसंकल्पश्रुतेः । तया च श्रुत्या लौकिकानुमानस्य बाधो द्रष्टव्यः । यदि संकल्पः साधनान्तरसापेक्षः, तर्हि तदभावे विदुषः वन्ध्यसंकल्पत्वात् सत्यसंकल्पत्वं हीयेत ; संकल्पानुगुणसाधनान्तरं त्विष्टमेवेत्यदोषः ॥

किं च—

## अत एव चानन्याधिपतिः ॥ ९ ॥

अत एव सत्यसंकल्पत्वादेव विद्वाननन्याधिपतिर्भवति । यदि विदुषः कश्चिदधिपतिः स्यात्, तर्हि तदधीनभोगस्य संकल्पमात्रसाध्यत्वाभावात्सत्यसंकल्पत्वं न स्यात् ; तस्माद्ब्रह्मात्मकस्य विदुषः संकल्पादेव सर्वैश्वर्यप्राप्तिरिति सिद्धम् ॥

पूर्वाधिकरणदृष्टान्तसंगत्येदमाह—

## अभावं बादरिराह ह्येवम् ॥ १० ॥

५. अभावाधिकरणम् ।

अत्र पूर्वपक्षे विशेषणश्रुतेरनेकधाभावश्रुतेर्वा मुख्यार्थत्वसिद्धिः, सिद्धान्ते द्वयोरपि श्रुत्योर्विदुषः सत्यसंकल्पत्वादेव मुख्यार्थत्वसिद्धिरिति फलभेदः । 'संकल्पादेव' इति श्रुत्या विदुषस्तावत् मनोऽस्तीत्यवगतम् । किं तस्य शरीरेन्द्रियाणि न सन्ति, उत सन्ति,

आहोस्वित् सन्ति न सन्ति चेति संशये, यथा 'संकल्पादेव' इत्यवधारणश्रुत्या साधनान्तराभाव उक्तः, एवं बादरिराचार्यः शरीरेन्द्रियाणामभावं मन्यते । आह ह्येवम् अभावमाम्नायः—'मनसैतान् कामान्पश्यन्रमते', 'य एते ब्रह्मलोके' इति । यदि विदुषः शरीरादिकं स्यात्, तदा मनसेति विशेषणमन्ययोगव्यवच्छेदकमनर्थकं स्यादित्येकः पूर्वः पक्षः ।

## भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥

शरीरेन्द्रियाणां मनस इव भावं सत्त्वं जैमिनिराचार्यो मन्यते, 'स एकधा भवति त्रिधा भवति' इत्यादिना विदुषः अनेकधाभावविकल्पामननात् । न हि शरीरभेदं विना कदाचिदेकधाभावः, कदाचिदनेकधाभावः संभवतीत्यपरः पूर्वः पक्षः ॥

सिद्धान्तस्तु—

## द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

अत एव मनसेति विशेषणादनेकधाभावविकल्पाभिधानाच्च, एवं लिङ्गद्वयात्, यदा शरीरादिसंकल्पः, तदा शरीरेन्द्रियवत्त्वम्; यदा तु तत्संकल्पाभावः, तदा शरीरेन्द्रियवत्त्वाभाव इति उभयविधं विदुष ऐश्वर्यं बादरायण आचार्यो मन्यते ।

द्वादशाहवत् यथा 'द्वादशाहमृद्धिकामा उपेयुः' इति उपायिचोदनागम्यत्वात् द्वादशाहस्य सत्रत्वम्, 'द्वादशाहेन प्रजाकामं याजयेत्' इत्यहर्गणत्वे सति यजतिचोदनागम्यत्वादहीनत्वं चेत्युभयविधत्वम्, तद्वदित्यर्थः ॥

ननु विदुषः शरीराद्यभावे कथं भोगस्तत्राह—

**तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥**

तनोः सेन्द्रियस्य शरीरस्याभावकाले संध्यवत्, यथा स्वप्ने मानसिकविषयभोगः जाग्रद्विलक्षणः, तद्वद्भोगः । कुतः, 'मनसैतान्कामान्पश्यन्रमते' इति श्रुतेः; एवमेवोपपत्तेरित्यर्थः ॥

ननु देहाद्यभावेऽपि भोगसत्त्वे शरीरादिसत्त्वाङ्गीकारो व्यर्थः स्यादत आह—

**भावे जाग्रद्वत् ॥ १४ ॥**

देहादिभावकाले यथा जाग्रद्भोगः स्वप्नभोगविलक्षणो भवति, तद्वदित्यर्थः ॥

ननु विकल्पामननलिङ्गेन विदुषोऽनेकशरीराणि सन्तीत्यभाणि, तद्व्यर्थम्; निरात्मकेषु तेषु भोगायोगादित्याक्षेपसंगत्येदमाह—

**प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥**

अत्र पूर्वपक्षे एकस्मिन्नेव देहे भोगः, सिद्धान्ते सर्वेष्विति फलभेदः। तत्र किं विदुषा सृज्यमानानि शरीराणि दारुयन्त्रवन्निरात्मकानि, उतास्मदादिशरीरवत् सात्मकानीति संदेहे, निरात्मकानीति पूर्वः पक्षः। सिद्धान्तस्तु— विदुषा सृज्यमानेष्वनेकेषु शरीरेषु विदुष आवेशोऽभिव्यक्तिः विद्यासामर्थ्यादुपपद्यते। प्रदीपवत् यथा प्रदीप एकोऽनेकवर्तिषु प्रविशति, तद्वद्विद्वाननेकान्तःकरणद्वारा देहेषु प्रविशति। तथाहि दर्शयति श्रुतिः— 'स एकधा भवति' इत्यादिका। तस्मात्सर्वाणि शरीराणि सात्मकान्येवेति सिद्धम् ॥

६. प्रदीपाधिकरणम्।

ननु विदुषः न शरीरवत्त्वं युक्तम्; 'तत्केन कं पश्येत्' इति 'ततोऽन्यद्विभक्तं यत्पश्येत्' इति च विशेषज्ञानाभावश्रवणादित्यत आह—

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥**

स्वाप्ययसंपत्त्योः सुषुप्तिपरममुक्त्योः अन्यतरापेक्षमिदं विशेषज्ञानाभावश्रवणम्। हि यतः प्रकरणादेवमाविष्कृतम्; सुषुप्तिप्रकरणापेक्षया 'ततोऽन्यत्' इत्यादि श्रुतम्, परममुक्तिप्रकर-

णापेक्षया 'तत्केन' इत्यादि ; तस्मान्नेदं सगुणब्रह्मविदः शरीराङ्गीकारे बाधकमिति ॥

पूर्वं संकल्पमात्रेण देहादिसर्गे विदुष उत्सर्गतः सर्वैश्वर्यमुक्तम् । तस्येह जगदुत्पत्त्यादावपवादः क्रियत इत्युत्सर्गापवादसंगत्येदमाह—

**जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥**

अत्र पूर्वपक्षे ईश्वरनानात्वम् , सिद्धान्ते तदैक्यमिति फलभेदः । तत्र किं विदुष ऐश्वर्यमीश्वरस्येव निरङ्कुशम् , उत सातिशयमिति विशये, निरङ्कुशमिति पूर्वः पक्षः । सिद्धान्तस्तु— जगदुत्पत्त्यादिव्यापारवर्जं सातिशयमेवैश्वर्यम ; जगद्व्यापारस्तु परमेश्वरस्यैव ; सृष्टिवाक्येषु सर्वत्र तस्यैव प्रकरणात् प्रकृतत्वात् , विदुषश्च तत्रासंनिहितत्वादित्यर्थः ॥

७. जगद्व्यापाराधिकरणम् ।

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

ननु 'आप्नोति स्वाराज्यम्' इति प्रत्यक्षश्रुत्या ऐश्वर्योपदेशान्निरङ्कुशं विदुष ऐश्वर्यमिति चेत् , न । आधिकारिकमण्डल-

स्थोक्तेः अधिकारे तत्तद्व्यापारे नियोजयतीत्याधिकारिकः स चासौ मण्डलस्थः सूर्यमण्डलस्थः परमात्मा, तस्योक्तेः उत्तरवाक्ये 'आप्नोति मनसस्पतिम्' इत्यत्र प्राप्यत्वेनोक्तेः विदुषः सातिशयमैश्वर्यमिति गम्यते। यदि पूर्ववाक्य एव निरतिशयमैश्वर्यमुक्तं स्यात्, तर्हि इदमीश्वरप्राप्तिवचनमनर्थकं स्यात्। अतः सातिशयं विदुष ऐश्वर्यमिति सिद्धम्॥

## विकारावर्ति च तथाहि स्थितिमाह॥ १९॥

सगुणे ब्रह्मणि विकारावर्ति निर्गुणं स्वरूपमस्ति। तथाहि ब्रह्मणि सगुणत्वनिर्गुणत्वयोः स्थितिमाह श्रुतिः—'तावानस्य महिमा ततो ज्यायांश्च पूरुषः' इत्यादिका। अयं भावः—यथा सगुणे स्थितं निर्गुणस्वरूपम् उपासको न प्राप्नोति, तज्ज्ञानाभावात्; तथा तद्गतं जगदुत्पत्त्यादिकमैश्वर्यं न प्राप्नोति, तदुपास्त्यभावात्; उपास्त्यभावश्च श्रुत्यभावादिति॥

अत्र दृष्टान्तत्वेन निर्गुणस्वरूपमुक्तम्, तत्र प्रमाणान्तरमाह—

## दर्शयतश्चैवं प्रत्यक्षानुमाने॥ २०॥

एवं ब्रह्मणो निर्गुणत्वं श्रुतिस्मृती दर्शयतः; 'न तत्र

सूर्यो भाति' इत्याद्या श्रुतिः, 'न तद्भासयते सूर्यः' इत्याद्या स्मृतिरिति ॥

इतश्चोपासकस्यानिरङ्कुशमैश्वर्यमित्याह—

## भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥

उपासकस्य उपास्यदेवतया सह भोगमात्रेण साम्यं श्रुतम्, न जगद्व्यापारेण; 'आपो वै खलु मीयन्ते लोकोऽसौ' इत्यादौ। तस्मात्साम्यलिङ्गाद्विदुषः सातिशयमैश्वर्यं गम्यत इत्यर्थः ॥

ननु यद्यैश्वर्यं सातिशयं स्यात्, तर्हि लौकिकैश्वर्यवदनित्यं स्यात्; एवं च विदुषामावृत्तिः प्रसज्येतेत्याशङ्क्य परमकृपालुर्भगवान्बादरायणः समादधाति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

ये अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्ताः, तेषामनावृत्तिरेव; 'न च पुनरावर्तते' इत्यादिक्रममुक्त्यभिधायकशब्दादित्यर्थः । निर्गुणब्रह्मविदां त्वावृत्तिशङ्कैव नास्ति, यतः सगुणविदामपि निर्गुणाश्रयणेनैवानावृत्तिर्नान्यथा । तस्माद्ब्रह्मविदां निरस्तसमस्तप्रपञ्चस्वप्रकाशचिदेकरसनिरतिशयानन्दात्मनावस्थितिरि-

त्यतिशोभनम् । 'अनावृत्तिः शब्दात्' इति सूत्रावृत्तिः शास्त्रसमाप्तिद्योतनार्था ॥

यज्ज्ञानाज्जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ।
ब्रह्मप्राप्तिः प्रत्यपादि तदस्मि ब्रह्म चिद्धनम् ॥

यस्यापाङ्गनिरीक्षणाद्भवरतिं भीतिप्रदामुज्जह-
त्र्यय्यन्तार्थविमर्शनाद्धतमहामायोऽभवं संततम् ।
तं शुद्धाद्वयबुद्धमुक्तमनघं कारुण्यपूर्णं शिवं
पूर्णानन्दमहाप्रभावमतुलं वन्दे गुरुं शाश्वतम् ॥

जडः क्वाहं बालः क्व च गहनवेदान्तसरणि-
स्तथाप्याम्नायार्थं परमशिवयोगीन्द्रकृपया ।
विजानन्व्याख्यानं व्यरचयमहं वेदशिरस-
स्तदेतत्क्षन्तव्यं मयि सदयदृष्ट्या बुधजनैः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीपरमशिवेन्द्रसरस्वतीपादाब्ज-
सेवापरायणेन श्रीसदाशिवेन्द्रसरस्वत्या विरचितायां
ब्रह्मसूत्रवृत्तौ ब्रह्मतत्त्वप्रकाशिकायां
चतुर्थोऽध्यायः ॥



# सूत्रानुक्रमणिका ॥



